चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येह लोकानां हितमादधे ॥ २३
एका मूर्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता ।
अपरा पश्यति जगत्कुर्वाणं साध्वसाधुनी ॥ २४
अपरा कुरुते कर्म मानुषं लोकमाश्रिता ।
शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकाम् ॥ २५
यासौ वर्षसहस्रान्ते मूर्तिरुत्तिष्ठते मम ।
वरार्हेभ्यो वराञ्श्रेष्ठांस्तस्मिन्काले ददाति सा ॥ २६
तं तु कालमनुप्राप्तं विदित्वा पृथिवी तदा ।
प्रायाचत वरं यं मां नरकार्थाय तं शृणु ॥ २७
देवानामसुराणां च अवध्यस्तनयोऽस्तु मे ।
उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ॥ २८
एवं वरमहं श्रुत्वा जगत्यास्तनये तदा ।
अमोघमस्त्रमददं वैष्णवं तदहं पुरा ॥ २९
अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षमे ।
नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ॥ ३०

---

विधानक (for विधाननम्) —(L 3) cf 33^cd D5 T नास्ति; G4 नान्यो (for नास्य). D5 भूतेषु (for लोकेऽस्मिन्) D5 om the ref —(L 5) D6 वाक्यम् (for त्वरितो) —(L 6) M3 4 lacuna, M5 वाय- (for क्षिप्र) M5 ...ेष तु रा न मे शृणु (for the post half).]

23 ^a) Dn2 D2 6 S पार्थ (for शश्वल्). —^c) M3-5 चतुर्धा (for आत्मान) D1 7 प्रतिभज्य (for प्रवि°) B2 Dn2 D3.6 [अ]ह (for [इ]ह) —^d) B1 हितकाम्यया (for °मादधे). S विधानमिदमादधे

24 ^a) Dn1 D4 G5 एक; Ca d एका (as in text) K3 तपश्चर्यं, Dn1 तप कुर्यां (for तपश्चर्यां) —^b) Dn1 D2 6 कुरुते भुवि सुस्थिता —^d) B4 S साध्वसाधु वा (T G1-4 च), D4 साधु साध्विति (for साध्वसाधुनी)

25 D4 om 25-26 —^a) S कर्म कुरुते (by transp) —^b) Dn2 D3 6 मानुष धर्ममास्थिता; D1 8 °षी तनुमाश्रिता ❀ Ca d अपरा क्षेत्रज्ञरूपा मानुषे लोके कर्म कुरुते । ❀ —^c) T G2 4 6 चतुर्थं (for चतुर्थी). D2 तु परा; S मूर्तिस्तु (for त्वपरा) Ś1 चतुर्थी त्वपरा शेते Cd cites शेते and अपरा (both as in text). —^d) Ś1 K1 D1 वार्ष- (for वर्ष). Ś K1-3 Dn1 D1 3 7 -सहस्रिकीं; K4 5 Dn2 D2 5 6 °स्रकीं; T °स्रकां; Bom ed °जिष (for °स्रिकाम्)

26 D4 om. 26 (cf v l 25) —^a) D1 8 सा (for [स]सौ) —^b) Dn2 वर्तिष्यते (for उत्तिष्ठते) —^c) S वराहीय (for र्हेभ्यो) Dn2 D3 6 इष्टांस (for श्रेष्ठांम्) —^d) K4 तस्याम्- (for तस्मिन्). B4 प्रयच्छति; D1 ददामि ते (for °ति सा) —After 26, K1 D1 3 repeat 22^cd, while D4 ins 215*.

27 D2 om 27 —^b) Ś K (except K2) D1 तथा; b पुरा (for तदा). —G3 om (hapl) 27^c-29^b —^c) Ś1 K1 2 4 Dn1 D1 3 6 (before corr as in text) G1.2 प्रयाचत; K3 5 Dn2 D2 5 अया°; D4 प्रवाचयत (hypermetric) (for प्रायाचत) K3-5 B Dc1 D2 3 6 यन्मां; D5 मां य (by transp), S (G5 om) पार्थ. —^d) B Dc1 D2 3 6 S (G5 om) तच्छृणु (for त शृणु).

28 G5 om 28 (cf v.1 27) —^ab) B Dc1 M3-5 दानवानां (for असुराणां) Ś K (except K5) B1-3 Dc1 Dn1 D1 4 7.8 T G2 4 चा(Dn1 वा)प्यव-ध्यस् (for च अव°). Dn1 मम (for ऽस्तु मे) —D4 om (hapl) 28^c-30^b. —^cd) Ś K (except K5) Dn2 D6 उपेत (for उपेतो). Ś K1 2 Dn2 D1 4 त मे त्व, K5 त्व मे त, D2 6 तमेव (for तन्मे त्व) S (G5 om) एव वरं वृणे देव तवानघ (T G3 तव नाथ; G4 देवनाथ) ममास्त्विति.

29 G5 om 29^ab (of v 1 27), D4 om 29 (cf. v 1 28). —^a) Ś1 K (except K5) D1 दत्वा (for श्रुत्वा) —^b) B2 (marg) पृथिव्यास्; Cd जगत्यास् (as in text) D6 (by corr.) तनयं (for तनये) S (G5 om) जगत्या भरतर्षभ. —^c) K3 B2-4 Dc1 Dn2 D3 6 T G1.3-5 M Cd प्रायच्छ; G2 प्रथितं (for अददं) Dn1 अमोघास्त्रं चाददं च. —^d) Ś1 transp. वैष्णव and तदहं. B Dc1 Dn2 D3 6 परम (for तदहं). B1 तदा (for पुरा) S परम वैष्णव पुरा.

30 D4 om. 30^ab (of v.1 28). —^ab) K4 Dn1 अमोघ; D1 अवोघं (sic), D3 अमोघ (for अवोच). B2 Dc1 D4 7 8 वा (for च). D3 मे (for वै). K4 B1 Dn2 अमोघं (for ह्यमोघ). K2 Dn2 D5 क्षिते; Cd क्षमे (as in text). S एतदस्त्रममोघं मे (M3-5 ते) भविष्यति वसुंधरे. —^c) G5 [अ]पि (for [अ]भि-). G1 M नरकस्य रक्षणार्थं तु (hypermetric). —^d) B1

अनेनास्त्रेण ते गुप्तः सुतः परबलार्दनः ।
भविष्यति दुराधर्षः सर्वलोकेषु सर्वदा ॥ ३१
तथेत्युक्त्वा गता देवी कृतकामा मनस्विनी ।
स चाप्यासीद्दुराधर्षो नरकः शत्रुतापनः ॥ ३२
तस्मात्प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम् ।
नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ३३
तन्मया त्वत्कृतेनैतदन्यथा व्यपनाशितम् ।
वियुक्तं परमास्त्रेण जहि पार्थ महासुरम् ॥ ३४
वैरिणं युधि दुर्धर्षं भगदत्तं सुरद्विषम् ।
यथाहं जघ्निवान्पूर्वं हितार्थं नरकं तथा ॥ ३५
एवमुक्तस्ततः पार्थः केशवेन महात्मना ।
भगदत्तं शितैर्बाणैः सहसा समवाकिरत् ॥ ३६

C. 7. 1292
B. 7. 29. 37
K. 7. 29. 45

नैतत्, D6 नैव (for नैन) D4 विशिष्यति, D7 8 हनि° (for वधि°)

31 a) Ś1 पृथ्वि (for गुप्त°) — b) Ś1 Dn1 पुत्र° (for सुत°) K4 तव (for पर) T G (except G5) M1. 2 सुत परमधार्मिके — c) G5 सुदुर्धर्ष° (for दुराधर्ष°)

32 a) Ś K1–4 D1. 4. 7. 8 भगवता; K5 Dn1 D2. 5 भगवती, Dn2 D3. 6 T G2–4 तु सा देवी, G1 M तथा देवी, G5 तथा देवे (for गता देवी) Cd cites देवी (as in text) — b) K5 कृतकर्मा, S °कार्या (for °कामा) Ś2 K (except K5) D1 गता क्षमा, Dn2 D3. 6 यशस्विनी; T G3–4 वसुधरा, G1. 5 M मही तदा (G1 M2 गता, G5 तथा, M1 धरा) (for मनस्विनी) —After 32ab, D4 ins

217* व्यजायत धरा देवी पुत्रं पुत्रशतावरम् ।

— c) T G2 तथा हि (for स चापि) — d) D3. 6 दानव (for नरक°) Ś K D (except Dc1) सूदन° (for तापन)

33 b) S वैश्य (for पार्थ) — D4. 7. 8 ins after 33ab D6 after 34

218* तदस्त्र देवगन्धर्वयक्षपन्नगराक्षसान् ।
सर्वान्समागतान्हन्यात्कि पुनस्त्वां धनंजय ।
भोगिना चैव दुर्धर्षं मया दत्तं सुरासुरैः ।
जहि प्राग्ज्योतिषं पार्थ पुरा सर्वान्द्विनस्त्वि म ।

[(L 1) D6 ततस्तु (for तदस्त्र) —(L 3) D6 वर (for चैव) D6 भगदत्त (for मया दत्त)]

— c) G5 नान्यो (for नास्य) Ś K1–3 D1 त्रि (for ऽस्ति) D4 नगरे; D7 8 नागेषु, S लोकेस्मिन् (for लोकेषु) — d) B1 भारत; Cd मारिष (as in text) S मदन्य कश्चिदर्जुन

34 a) D4 यन् (for तन्). Dc1 D2. 5 (before corr as in text) त्वत्कृते च; S °ते हि (for °तेन) — b) Ś1 व्यवनाशित, Ś2 K1. 2. 4 D1 ह्य(Ś2 व्य, K2 D1 ह्य)पपादित, K3 ह्युपमादितं, K5 B2 व्यमनायि(K5 °शि)त, B1. 2. 3 Dn2 व्यपलापित, B2 (marg) 4 Dc1 D3 Cd °नामितं (for °नाशितम्). S अन्यथैवोपनिर्मित, Ca अन्यथा व्यपलासित — c) K2 B1 (marg) 2. 3 Dc1 D2–4. 6–8 विमुक्त; D5 (by corr sec m) विमुक्तः (for वियुक्त) — d) G2 महारथ (for °सुरम्) — After 34, D6 ins 218*

35 a) Dn2 D4. 6 युद्ध, D5 यु*, Bom ed जहि (for युधि) — c) D5 तथा (for यथा) B1 जघ्ने चाहं यथा पूर्वं — d) K2 B1 Dn2 D2. 6 तदा (for तथा) — For 35, S subst

219* इन्द्रस्योऽय महास्त्रेण भगदत्तं सुरासुरैः ।
यथाह नरक लोकहितार्थमहन पुरा ।

[(L 2) G4 अथाह, M1. 2 यथाह G1 M1. 2 लोके (for लोक)]

36 Before 36, S ins सजय उ° — a) K4 तदा (for तत) — c) K1. 2 D6 शरैर्, K4 Dn2 D7 8 मितैर् (for शितैर्) — d) K4 Dn1 D4 समवाकिरन्. — After 36, K2 (marg) D4. 7. 8 ins

220* घण्टा काञ्चनमच्छिन्ना विश्वकर्मविनिर्मिताम् ।
काञ्चनशृङ्खलानद्धा सन्या चिच्छेद पाण्डव ।
सा हता शरघातेन वज्रनिष्पेषसनिभा ।
पपात दूरपातेन चन्द्रबिम्बसमुज्ज्वला ।
दक्षिणापि हता राजन्घण्टा बाणैः किरीटिना । [5]
पपात दूरमध्वान गत्वा सूर्य इव क्षितौ ।
भगदत्तेन निर्मुक्तः सुप्रतीकोऽपि वेगत ।
हनुमान्सूर्यबिम्बस्य ग्रसनार्थमिवोद्यत ।

[(L 1) D4 नद्धिन्ना (for सच्छन्ना) —(L 5) K2 विहिता (for [अ]पि हता) K2 किरीटिना —(L 8) D7 8 [उ]न्मुक्त (for [उ]द्यत).]

On the other hand, D5 after 36 ins. 222*.

ततः पार्थो महाबाहुरसंभ्रान्तो महामनाः ।
कुम्भयोरन्तरे नागं नाराचेन समार्पयत् ॥ ३७
समासाद्य तु तं नागं बाणो वज्र इवाचलम् ।
अभ्यगात्सह पुङ्खेन वल्मीकमिव पन्नगः ॥ ३८
स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ ।
नदन्नार्तस्वरं प्राणानुत्ससर्ज महाद्विपः ॥ ३९
ततश्चन्द्रार्धबिम्बेन शरेण नतपर्वणा ।
बिभेद हृदयं राज्ञो भगदत्तस्य पाण्डवः ॥ ४०
स भिन्नहृदयो राजा भगदत्तः किरीटिना ।
शरासनं शरांश्चैव गतासुः प्रमुमोच ह ॥ ४१

---

37 ᶜᵈ) B1 D1 अतरं Ś K (except K5) D1 4 सम(Ś1 °मा)र्दयत्, B3 Do1 Dn1 D3 5 समर्प°, D7 समर्थं°; D8 समार्पयन् (for °यत्) Dn3 D8 6 अविध्य दर्जुनो नाग कुमयोरतर भृश = (var) line 2 of 221*. — For 37, S subst

221* तत सधाय विशिखं दीप्यमानमिवानलम् ।
अविध्यदर्जुनो नागं कुम्भयोरन्तरे भृशम् ।

38 ᵃ) D2 5 च; D6 स (for तु). B Do1 Dn2 D4 7 8 स समासाद्य तं नाग; S तस्याददानस्य धनुर्. — ᵇ) K5 Dn1 D3 5 भित्वा; S द्वि(T1 G1 द्वी)प (for बाणो). Ś1 M3-5 वप्रम् (for वज्र) — ᶜ) Ś2 अत्य**; B1 अभ्ययात्; D6 अत्यगात् (for अभ्य°) Do1 मह्लेन (for पुङ्खेन) S अत्यगात्स शरोरयुग्रो. — ᵈ) Ś1 K1 वाल्मीकम्; B4 Dn1 D8 T G8 वल्मीक (for °कम्). — K2 (marg) 4 Dn2 D1 3 ins after 38 Dn1 after line 3 of 227* D4 5 7 8 (marg) after 223* D6 after 36

222* स करी भगदत्तेन प्रेर्यमाण' पुन पुनः ।
न करोति वचस्तस्य दरिद्रस्येव कामिनी ।

[(L 1) D4 7 गजो (for करी) Dn1 भगदत्तस्य (for °त्तेन) D4 7 नोद्यमान° (for प्रेर्यमाण) K2 Dn2 D5 8 मुहुर्मुहु° (for पुन पुन°). D6 स वीरो भगदत्तस्य शरदाहेन पीडित° — D8 reads line 2 twice — (L 2) K2 (marg) Dn D5 8 (first time) योषिता (Dn °त°) (for कामिनी) D4 7 8 (second time) दारा इव दरिद्रस्य अविधेयत्वमागमत् ]

On the other hand, D4 5 7 8 ins after 38

223* मध्ये विदीर्णस्तस्थौ स प्रास्यन्दत पुन पुन ।
स्यन्दमान ततो नाग चरणाभ्यामनोदयत् ।

[(L 1) D4 हस्ती (for तस्थौ) — D8 om line 2 ]

39 ᵃ) K3 मत्तो (for स तु) — ᵇ) K4 5 B1 Do1 Dn D2 3 5 6 T1 G2 3 5 M3-5 अवर्नीं (for अवनिं) S गत (for ययौ). D4 7 8 दंताभ्यामगमन्महीं — ᶜ) Ś2 damaged. B3 (marg. as in text) आर्तस्वर°; B4 T1 °स्वन; G5 अतिस्वरं (for आर्त°) — After 39, Bom Kumbh ed ins

224* ततो गाण्डीवधन्वानमभ्यभाषत केशव ।
अय महत्तर' पार्थं पलितेन समावृत' ।
वलीसछन्ननयन शूर' परमदुर्जय ।

Bom Kumbh. ed cont B (B1-3 marg) Dn2 D8 5 7 ins after 39

225* अक्ष्णोरुन्मीलनार्थाय बद्धपट्ट' सदा नृप ।
देववाक्यात्प्रचिच्छेद शरेण भृशमर्जुन ।
छिन्नमात्रेंऽशुके तस्मिन्रुद्धनेत्रो बभूव स' ।

[(L 1) Dn2 चैल° (for पट्ट') Bom Kumbh ed एतौ (for सदा) D8 5 नृप (for नृप) —(L 3) B1-3 -मात्रे (for -मात्रे) B पटे (for [अ]शुके). Dn2 सछिन्ने चांशुके तस्मिन्, D5 छिन्नमात्राशुके त° (for the prior half) ]

Bom Kumbh ed cont

226* तमोमय जगन्मेने भगदत्त प्रतापवान् ।

40 B4 om 40ᵃᵇ — ᵃ) Dn2 D2.6 रूपेण; S -तुल्येन (for बिम्बेन) — ᵇ) Ś K (except K5) D1 शितेन; B1-3 Do1 बाणेन (for शरेण) B1 2 5 Do1 Dn2 D2 3 6 [आ]नत- (for नत) S शरेणामित्रक र्षिन (G5 M3-5 °र्शिना) — After 40ᵃᵇ, Dn1 ins

227* बिभेद सकलो देहो द्विधाभूतो बभूव ह ।
राज्ञा बलवता तेन जानुभ्यां धारितो रणे ।
अर्जुन प्रति युद्धे न चिरकाल दधार स ।
एव युद्ध तदा तेन राज्ञा तेन दुरात्मना ।
किरीटी चार्धबिम्बेन शरेणानतपर्वणा । [5]
[After line 3, Dn1 ins 222* ]

— ᶜ) M3-5 वीरो (for राज्ञो) — ᵈ) Dn1 मारिष (for पाण्डव°).

41 ᶜᵈ) K1 चैव (for चैव) K3 गतायु°; D1 °स्त्र (for °सु°) Do1 प्रमुमोह च (for °मोच ह) S मुक्त्वा शरासनं बाहू प्रसार्याव(T G1 °र्थ न्य; G3.4 °र्यान्व; G5 °र्यावा)पत(G1 °गम)द्गजात्.

शिरस्तस्य विभ्रष्टः पपात च वराङ्कुशः ।
नालताडनविभ्रष्टं पलाशं नलिनादिव ॥ ४२
स हेममाली तपनीयभाण्डा-
त्पपात नागाद्गिरिसंनिकाशात् ।
सुपुष्पितो मारुतवेगरुग्णो
महीधराग्रादिव कर्णिकारः ॥ ४३
निहत्य तं नरपतिमिन्द्रविक्रमं
सखायमिन्द्रस्य तथैन्द्रिराहवे ।
ततोऽपरांस्तव जयकाङ्क्षिणो नरा-
न्बभञ्ज वायुर्बलवान्द्रुमानिव ॥ ४४

इति श्रीमहाभारते द्रोणपर्वणि अष्टाविंशोऽध्यायः ॥ २८

# २९

संजय उवाच ।
प्रियमिन्द्रस्य सततं सखायममितौजसम् ।
हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्तत ॥ १
ततो गान्धारराजस्य सुतौ परपुरंजयौ ।

C. 7 1303
B 7 30 2
K 7 30 2

42 [ab]) Dn1 शिरसा (for °सस्) K3 B Dc1 Dn2 D2 4 7 8 विभ्रष्ट (for °ष्ट) K1 2 4 D1 महां कुश°, K3 B (except B4) Dc1 Dn2 D5 (before corr) 7 8 वराशुक (for °कुश) S पपात पततस्तस्य शिरस (M3-5 °स्य) पूर्वमकुश — B2 om 42[cd] — [c]) D4 वल; T G1-3 M1 2 नाळ; M3-5 फल (for नाल-). K4 5 Dn2 G2 4 ताडित; B1 पातेन; B4 सादन, T G3 तामन (for डाडन) — [d]) S नळिनाद्

43 [ab]) M3-5 transp तपनीयभाण्डात् and गिरिसंनिकाशात्. D4 8 भांड°; G6 पांडरात् (for भाण्डात्) Cd cites तप° (as in text). Ś1 K1 2 4 D1 -सनिवेशात्; Ś1 damaged (for °काशात्) — [c]) Dn2 D5 8 G3-5 मपुष्पितो (for सुपु°) D (except Dc1 D1) S भग्नो (for रुग्णो) K4 सुपुष्पितो वायुवेगभग्नो

44 [a]) T G1 2 M1 2 विक्रम° (for विक्रम) — [b]) B1 महायम् (for सखायम्) Dc1 (before corr) सखा महेंद्रस्य (for सखायमिन्द्रस्य) K3 5 B Dc1 Dn D2 5 7 तदा, D3 6 तम्; D4 8 तद् (for तथा) D4 8 इन्द्रिर् (for ऐन्द्रिर्) S सखा (T G3-5 °हा) यमेंद्रस्य स इन्द्रसभव° — [c]) K3 तथा (for ततो) D2 4 ततः परांस् (for ततोऽपरांस्) T G3-5 रणे; G1 M नृपान् (for नरान्) — [d]) Dn D2 5 6 S इव द्रुमान् (by transp)

Colophon — *Sub parvan* Editions संशप्तकवध°. — *Day of Drona's Generalship* Ś2 K1 2 द्वितीय (K1 2 द्वितीययुद्ध) दिवस, G1 M1 2 द्वितीयेऽह्नि — *Adhy name* Ś K1-3 5 B (B2 m) D S भगदत्तवधः. — *Adhy no* (figures, words or both) K5 26, B3 25, Dn1 D2 8 S 28 (as in text) — *Śloka no* Dc1 45, Dn1 46

## 29

D4 8 ins before the ref K3 (marg) D5 7 after the ref

228* पूर्वंदत्त्य महावीर भगदत्त महाबलम् ।
कृष्णौ दशार्हवीभत्सू जघ्नतुर्युधि दुर्जयम् ।
नागायुतबलप्राण शूरमाहवशोभिनम् ।
सुप्रतीकोऽपि बलवान्नागायुतसमो बली ।
वैष्णवास्त्रेण संयुक्तो अङ्कुशेन च वीर्यवान् । [5]
त्रीणि तेजांसि तत्रैव त्रेताग्निरिव चाध्वरे ।
भगदत्त रणे शूरं निहन्यात्कोऽर्जुन विना ।
अर्जुनोऽपि महावीर्यो हत्वा पितृसख रणे ।
क्षत्रधर्मं विचिन्त्याजौ धिग्धिगित्येव चाब्रवीत् ।
तमादित्यसम कान्त्या भूमौ निपतित दिव । [10]
प्रसमीक्ष्य तदा पार्थो रेणुना त्ववगुण्ठितम् ।

[(L. 1) D5 पूर्वे (for पूर्वं) — D8 om line 2 — (L 2) D4 (by corr) वैष्ण (for कृष्णौ) D4 (before corr) वैष्णवास्त्रेण सयुक्तेन (hypermetric) (for

C 7. 1303
B 7. 30. 2
K 7. 30. 2

आर्छेतामर्जुनं संख्ये भ्रातरौ वृषकाचलौ ॥ २
तौ समेत्यार्जुनं वीरौ पुरः पश्चाच्च धन्विनौ ।
अविध्येतां महावेगैर्निशितैराशुगैर्भृशम् ॥ ३
वृषकस्य हयान्सूतं धनुश्छत्रं रथं ध्वजम् ।
तिलशो व्यधमत्पार्थः सौबलस्य शितैः शरैः ॥ ४
ततोऽर्जुनः शरव्रातैर्नानाप्रहरणैरपि ।
गान्धारान्व्याकुलांश्चक्रे सौबलप्रमुखान्पुनः ॥ ५
ततः पञ्चशतान्वीरान्गान्धारानुद्यतायुधान् ।
प्राहिणोन्मृत्युलोकाय क्रुद्धो बाणैर्धनंजयः ॥ ६
हताश्वात्तु रथात्तूर्णमवतीर्य ।
आरुरोह रथं भ्रातुरन्यच्च ।
तावेकरथमारूढौ भ्रातरौ वृषकाचलौ
शरवर्षेण बीभत्सुमविध्येतां पुनः ।
स्यालौ तव महात्मानौ राजानौ ।
भृशं निजघ्नतुः पार्थमिन्द्रं वृत्रबलाविव ।
लब्धलक्ष्यौ तु गान्धारावहतां पाण्डवं ।
निदाघवार्षिकौ मासौ लोकं ।
तौ रथस्थौ नरव्याघ्रौ राजानौ वृषकाचलौ

---

the prior half). — (L 5) D₅ सयुक्त (for संयुक्तो). D₅ सांकुशेन स, D₅ अकुशेनैव (for °शेन च) —(L. 6) D₇ वा (for च) —(L 7) K₂ को हन्याद्; D₁ हन्यात्को हि (for निहन्यात्को) — K₂ om lines 8–9. —(L 9) D₅ विनिघ (for विनिघ्नन्) — (L 10) D₅ कीर्त्या (for कान्त्या) —(L 11) D₄ रणेन (for रेणुना). D₅ चैव (for त्वव).]

1 ᵃ) B₁ सदश (for सततं) T G₂–₄ ततस्तं प्रियमिद्रस्य —ᵇ) T G₂–₄ सहायम् (for ससायम्) —ᵈ) D₂ ₆ अवर्तयत् (for °र्तत)

2 ᵃ) K₄ गंधार (for गान्धार). —ᵇ) S पुत्रौ (for सुतौ). M₃–₅ परमदुर्मर्षौ (for °पुरंजयौ) —ᶜ) Ś K₁. ₂ ₄ D₀₁ D₁ Cd आछेतां (Ś₁ °त्ता)म्; K₃ अर्दे°; K₄ प्राछें°; D₅ अछें°; S अस्ये° (for आर्छे°). G₁. ₂ ₅ M सख्ये; G₄ सघे (for संख्ये). —ᵈ) S विसृजंतम· (M₃–₅ °ताव)जिह्मगान्

3 ᵃ) G₅ वीर (for वीरौ) —ᵇ) S पूर्वं (for पुर) G₄ धन्विनां Dn₂ D₃ पुन पार्थिव धन्विनौ —ᶜ) Dn₁ आविध्येतां, G₄ अव° (for अवि°) Dn₁ महावेगौ (for °वेगैर्) —ᵈ) D₀₁ आयुधैर् (for आशुगैर्). G₅ द्रुत (for भृशम्).

4 ᵃ) Dn₂ वृषकस्य तु (hypermetric) (for वृषकस्य) —ᵇ) G₁ M₁ ₂ छत्र; G₂ ₄ चित्रं (for छत्रं). K (except K₅) Dn₁ ध्वज रथं (by transp), D₄. ₆ G₃ ₄ रथध्वज, G₁ M₁ ₂ ध्वज रणे. —ᶜ) Dn₂ D₅. ₆ व्यहनत् (for व्यधमत्) —ᵈ) K₅ D₄. ₇. ₈ सिते (for शितै).

5 ᵃ) D₇ ₈ -शतैर् (for -व्रातैर्) —ᵇ) Dn₂ T G₂–₅ प्रहरणान् (for °रणैर्). S युधि (for अपि). —ᶜ) Bom. ed आकुलांश् (for व्याकु°). S गांधारानाकुली कुर्वन् —ᵈ) S अचल· (for सौबल)

6 ᵃ) Ś₁ पंचशतिं, Ś₁ Dn₂ D₃ ₆ ... B₁ D₀₁ Dn₁ D₄ ₇ ₈ M₃–₅ पच (K₅ °चा, °शतान्). K₅ Dn₁ D₃ ₈ वीरो (for वीरान्) Dn₁ राजन् (for बाणैर्)

7 ᵃ) B₁ ₂ (marg). ₈ स हताश्वाद् (for ... —ᵇ) K₅ D₅ महारथ°; S महास(G₃ °द्यु)ति°भुज) — K₂ om 7ᶜᵈ —ᵈ) B₂ स (for च). K₁ ₂ ₄ D₁ आददे (for प्राद्रवे). S अ(T G₃–₄ न्यदादाय कार्मुकं·

8 ᵃ) Ś₁ B₂ D₀₁ Dn₁ पृकं (for पृक). —ᵇ) lacuna, G₅ तावुभौ (for भ्रातरौ). —Ś K (excep K₅) D₁ om (hapl.) 8ᶜ–9ᵇ. —ᵈ) K₅ Dn₁ D₂ ₄ ₇. ₈ नरर्षभौ, B D₀₁ Dn₂ D₃ ₆ मुहुर्मुहु (for पुन पुन)

9 Ś K (except K₅) D₁ om. 9ᵃᵇ (cf v. l. 8). —ᵃ) K₅ B D₀₁ Dn D₂ ₆ (before corr.). ₇ ₈ G₂ श्यालौ, D₂ ₄ ₅ ₆ (by corr) शालौ (for स्यालौ) —ᵇ) K₅ सौबलौ, Dn₂ D₃ ₆ M₃–₅ भ्रातरौ; G₅ lacuna (for राजानौ) —ᶜ) Ś₁ K₁ B₂ ₄. ₅ Dn₁ D₁ ₂ विज घ्नतु; S सौ ज° (for निज°). B₁ निजघ्नतुर्भृशं पार्थम्· —ᵈ) D₅ S (except T G₃) बलाविव (for -बला°).

10 ᵃ) N (except Ś₁ K₁) T G₁–₄ M -लक्ष्मौ (for -लक्ष्यौ) G₅ तौ लब्धलक्षौ गांधारौ· —ᵇ) K₄ D₅ दह (D₅ °हे)तां; B₂ D₀₁ Dn₁ D₇ ₇. ₈ आहतां; Dn₂ D₃ ₆ S जघ्नतु; Cd अहतां (as in text). —ᶜ) Ś₁ K₁–₄ समोघौ; K₅ B₁. ₂ ₃ D₀₁ Dn D₂ ₅ ₈ S नैदाघ (D₅ °घौ); D₄ निदाघे (for निदाघ). T G₃–₅ M₃– (for मासौ). —ᵈ) Ś₁ ('

संश्लिष्टाङ्गौ स्थितौ राजञ्जघानैकेषुणार्जुनः ॥ ११

तौ रथात्सिंहसंकाशौ लोहिताक्षौ महाभुजौ ।
गतासू पेततुर्वीरौ सोदर्यावेकलक्षणौ ॥ १२

तयोर्देहौ रथाद्भूमिं गतौ बन्धुजनप्रियौ ।
यशो दश दिशः पुण्यं गमयित्वा व्यवस्थितौ ॥ १३

दृष्ट्वा विनिहतौ संख्ये मातुलावपलायिनौ ।
भृशं मुमुचुरश्रूणि पुत्रास्तव विशां पते ॥ १४

निहतौ भ्रातरौ दृष्ट्वा मायाशतविशारदः ।
कृष्णौ संमोहयन्मायां विदधे शकुनिस्ततः ॥ १५

लगुडायोगुडाश्मानः शतघ्न्यश्च सशक्तयः ।
गदापरिघनिस्त्रिंशशूलमुद्गरपट्टिशाः ॥ १६

सकम्पनर्ष्टिनखरा मुसलानि परश्वधाः ।
क्षुराः क्षुरप्रनालीका वत्सदन्तास्त्रिसंधिनः ॥ १७

चक्राणि विशिखाः प्रासा विविधान्यायुधानि च ।
प्रपेतुः सर्वतो दिग्भ्यः प्रदिग्भ्यश्चार्जुनं प्रति ॥ १८

खरोष्ट्रमहिषाः सिंहा व्याघ्राः सृमरचिल्लिकाः ।

C 7 1320
B 7 30 19
K 7 30 19

---

(except B2) Dc1 D1 2 4 5 G4 M4 घर्मांशु(K4 °सु) मिर्, K1 च मांशु° (sic), G5 (*inf lin sec m*) घर्पांशु° (for घर्मांम्बु°)

11 D3 om. 11 —[ab]) D5 रथस्थौ च (for तौ रथस्थौ) S तौ स्थालौ तत्र (G1 M1 2 तदा रण) दुर्धर्षौ समाने स्यदने स्थितौ —[c]) Ś1 सश्लिष्यावस्थितौ राजन्; Ś2 K1, 2 4 D1 °ष्य भ्रातरौ राजन्; S सस्पृशतौ तदा न्योन्य —[d]) K3 T G2–4 M3–5 पुन (for [अ]र्जुन)

12 [a]) D3 रथस्थौ च नरव्याघ्रौ; S तौ रथात्सहसा वीरौ —[b]) Ś K (except K3) D1 लोहिताङ्गौ (for °ताक्षौ) —[c]) Dn2 D3 6 S निहतौ; Bom ed. राजन्तं (for गतासू) Ś2 Dn2 पतितौ (for पेततुर्) Dn2 D2. 6 भीमौ, S भूमौ (for वीरौ) —[d]) Ś2 सोदरावु; K2 4, 5 B1 Dn D5 5 7 सौदर्यावु (for सोद°) Ca एकलक्षण, Cd °णौ (as in text) Dc1 (before corr) D2 6 सोदर्यौ (Dc1 °र्या-) विक(D3 °ह्ल)लेक्षणौ

13 [a]) M1 2 ययोर् (for तयोर्) Ś K1–2 D1 भूमौ (for भूमिं) Bom ed तयोर्भूमिं गतौ देहौ —[b]) Bom ed रथाद् (for गतौ) S -रथयौ (for प्रियौ) —[d]) S विकिरतौ स्वमुत्तम

14 [a]) Dn2 D3 6 तौ दृष्ट्वा (for दृष्ट्वा वि) Ś K (except K3) D1, 4 5 7 8 तु; T G2, 4 तौ (for वि) G1, 5 M1 2 सखे; G3 M3 सवे (for सङ्ख्ये) —[c]) S सर्वे (for भृश) K6 मस्त्राणि (for मश्रूणि) —[d]) K1, 2 D4 पुत्रस् (for पुत्रास्)

15 [a]) T G2–3 तौ; G1 M1 2 स (for नि) —[b]) Dn2 D4 -विशारदौ (for °रद°). —[d]) K1 शाकुनिस् Ś2 K (except K4) D1 G5 तदा (for तत°) G3 शाकु-निर्निदधे तत

16 [a]) Dn2 नाराचा सगुडाश्मान°; D3 6 लांगला लगुडा°; S मसल्येया घनाश्मान (T1 °या दृषाश्मान°; T2 G3 4 °या दृषाश्मान°; G2 °न्याद्रथाश्मान°; M1 °या जनाश्मान°; M2 °या घनाश्मान, M4 5 °यानथा श्मान) —[b]) D2 4 5 (marg corr as in text) 7 शतघ्नश्च (D2 °घ्न च); D3, 6 G M1 2 °घ्नीश्च; T2 °घ्निश्च (for °घ्न्यश्च) Ś2 शतघ्नय, D6 सशाक्तु (sic), S सकिंकिणी (T °णि) (for सशक्तय°) —[c]) Ś2 K2–4 G1 M1 2 -निस्त्रिंशा (for निस्त्रिंश) —[d]) K1 D4 8 पट्टिश°, K2 S पट्ट(K2 °ट्टि)सा (for -पाट्टिशा) Ś1 -शूलपाट्टिशमुद्गरा

17 [a]) D7 8 स (for स) Ś1 K4 D1 शरशक्त्यृ-(K4 D1 °क्त्य)ष्टिनखरा, Ś2 सङ्गमितृष्टि°; K1 ***स मर्ष्टि, K3 ****नृष्टि°; S शक्त्यृ(T G2 3 5 °क्त्य)-ष्टिप्रासनखर- (G1 M1 2 °रा) —[b]) Ś K2 D1 मुसु लानि, K1 5 Dc1 Dn D6–8 मुशलानि (D3 6 °सि-); B1–3 मुषलानि; B4 मुसलादि (for °लानि) Some MSS परस्वधा —[c]) Dn1 क्षुर-; D4 7 8 क्षुरान् (for क्षुरा°) K3 क्षुराम; Dc1 D5 क्षुरप्रा (for क्षुरप्र) D7 8 -नालीकान्; G1 M नाळीका (for नालीका) D3 6 क्षुरप्रहरणा(D3 ना)लीक (D6 °कान्). —[d]) Dn2 [आ]यस (for वत्स-) K2 B Dc1 (before corr) Dn D1–3 6 T1 दतास्थि, K5 (before corr) -दता सु; D7 8 दतास्त्रि; M3–5 दतास्त्र- (for -दन्तास्त्रि) B Dc1 Dn2 D1 S सधय°, D3 6 -वधय° (for सन्धिन°)

18 [a]) D7 8 चित्राणि (for चक्राणि) K5 D3, 6 विवि(D6 °व)धा°; D4 विशिखिना (for विशिखा°) K1 प्रासो; D3 6 पाशा (for प्रासा) S कुसप्रा(G1 M1 2 °सा प्रा, G5 °त प्रा)समहाशक्त्यो —[b]) Dn1 [अ]पि (for च) —[c]) S आपेतु (for प्र°) B4 D1 शतशो (for सर्वतो) G5 दिग्भि° (for दिग्भ्य°) —[d]) Ś2 विदिग्भ्यश्च (for प्रदि°) D3 6 चार्जुन केशव प्रति

19 Dn1 om (hapl) 19[c]–20[b]. —[a]) G5 खरोष्ट्रा

अपायाज्जवनैरश्वैः शकुनिः प्राकृतो यथा ॥ २७
ततोऽर्जुनोऽस्त्रविच्छ्रैष्ठ्यं दर्शयन्नात्मनोऽरिषु ।
अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीम् ॥ २८
सा हन्यमाना पार्थेन पुत्रस्य तव वाहिनी ।
द्वैधीभूता महाराज गङ्गेवासाद्य पर्वतम् ॥ २९
द्रोणमेवान्वपद्यन्त केचित्तत्र महारथाः ।
केचिद्दुर्योधनं राजन्नर्द्यमानाः किरीटिना ॥ ३०
नापश्याम ततस्त्वेतत्सैन्यं वै तमसावृतम् ।
गाण्डीवस्य च निर्घोषः श्रुतो दक्षिणतो मया ॥ ३१
शङ्खदुन्दुभिनिर्घोषं वादित्राणां च निस्वनम् ।
गाण्डीवस्य च निर्घोषो व्यतिक्रम्यास्पृशद्दिवम् ॥ ३२
ततः पुनर्दक्षिणतः संग्राममश्चित्रयोधिनाम् ।
सुयुद्धमर्जुनस्यासीदहं तु द्रोणमन्वगाम् ॥ ३३
नानाविधान्यनीकानि पुत्राणां तव भारत ।
अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः ॥ ३४
तं वासवमिवायान्तं भूरिवर्षशरौघिणम् ।

C 7 1337
B 7 30 16
K 7 30 36

---

230* दुर्धूर्वदेविन्गान्वारे नाक्षान्क्षिपति गाण्डिवम् ।
ज्वलिताग्निशिखांस्तीक्ष्णाञ्शरान्क्षिपति गाण्डिवम् ।
[ (L 1) G1 M1 2 देवि (for देविन्) T G2–4 M5 गांडिव°, G5 पाडव° (for गाण्डिवम्) —(L 2) M3–5 ज्वल्नो (for ज्वलितान्) G5 ज्वलितामिशिखास्तीक्ष्णान् (for the prior half) T G2–4 M5 गांडिव ]

27 a) D2 G1 4 तदा (for तथा) —b) B2 (marg) G1 M1 2 ततो (for त्रस्तो) K1 °शराहता; Dn2 D4 7 8 °हित°, M4 5 °शरैर्हत° (for °शराहत°) —c) Dn1 अपायाच्छकुनिस्त्रस्तो —d) Dn1 वेगेन (for शकुनि°) Ś प्रहतो (for प्राकृतो)

28 a) K1 4 श्रेष्ठं; K2 B शौर्यं, Dn शीघ्र, D3 शौर्यं; D5 श्रेष्ठो, S शौर्यं (for श्रैष्ठ्य) —b) B1 विभु, Dn2 T G1 2 4 M रिपून्; G2 5 रिपो° (for ऽरिषु)

29 a) Dn2 आ- (for सा) S वध्यमाना (for हन्य°) —b) K3 B (except B1) Dc1 Dn D1 3 6 तव पुत्रस्य वाहिनी

30 a) K1 [उ]पपद्यंत, Dn1 G5 (by corr) [अ]भ्य°, G5 (before corr) [अ]भ्यपद्यत (for [अ]न्वपद्यन्त) —b) D4 तव (for तत्र) B Dc1 S नरर्षभा (for महारथा) —c) Dn2 D3 6 मद्ये (for राजन्) —d) Dn2 D3 6 S वाद्यमाना° (for अर्द्य°)

31 a) K1 2 Dc1 Dn1 D4 7 8 नापश्यामस् (for °श्याम) K3 B Dc1 Dn2 D1 2 त्वेन, D3 6 तेन; D4 श्वेत, D7 8 चैनं (D8 °च) (for त्वेतत्) S तत एन न पश्यामि —b) Dn1 सैन्यं च; D4, 7 8 सैन्येन, D6 तत्सैन्य (for सैन्य वै) D4 7 8 रजसा (for तमसा) K1 सैन्य वै तत्समावृत, K2 B Dc1 Dn2 सैन्ये वै (Dc1 चा) रजसावृते (K3 Dn2 °त), D3 6 S तीव्रेण रज(G1 2 M1 2 तम)सावृते (D3 6 °त) — D6 om 31c–32b
—c) K4 गाजीवस्य (for गाण्डी°) D8 स्वनिर्घोष°; G5 M3–5 तु नि° (for च नि°)

32 D6 om 32ab (cf v l 31) —a) D4 5 7 8 -निर्घोषो; G3 -निर्घोरं (for -निर्घोषं) —b) Ś K (except K4) B1, 4 Dc1 D3 G1 2 5 M3 4 नि:स्वन, D2 4 5 7 8 नि(D4 नि)स्वन° (for निस्वनम्) —c) K3 B2, 5 D1 G5 M3 तु (for च). Ś1 निर्घोषं, Dc1 निर्घोषा (for निर्घोषो) —d) Dc1 [अ]स्पृशन्दिवं, D4 7 8 [अ]विशद्दिवं, T G (except G5) M1 2 दिवं स्पृशन् (T G2 3 °त्) (for [अ]स्पृशद्दिवम्).

33 b) S समरे (for संग्रामश्च). Ś1 Dn2 T G3–5 योधिन°; G1 M योधिभि° (for योधिनाम्) G2 समरामस्तुमुलो [? लो] महान् —c) K3 B Dc1 Dn2 D6 चार्जुनस्य, D4 8 स्वर्जु° (for अर्जु°) Ś K1 2 4 5 D1–3 5 सुयुद्धस्या(K5 °श्चा)र्जुनस्यासीद्, Dn1 सक्रुद्धस्या° —d) Ś K1–3 D1 अहं तु, D6 दहतं; T G1 3–5 M अह च (for अहं तु) Ś K D1 4 6–8 अन्वया(D6 °गा)त्; B. Dn2 D2 3 5 अन्वगां (D2 5 °या); Dn1 G1 5 M1 2 अन्वगा° (Dn1 °गात्), Bom ed अन्वियां (for अन्वगाम्) G2 समरे चित्रयोधिन° (cf 7 29 33b) —After 33, B1 3 (both marg) repeat 21c–22b, while after 33, N ins

231* यौधिष्ठिराण्यनीकानि प्रदहन्ति ततस्ततः ।
[ B4 5 Dn2 यौधिष्ठिराण्यनीकानि (for the prior half) Dn1 D2 om (hapl) from प्रदहन्ति up to कानि (in 34a). Ś K1–3 D4 7 8 प्रदहत, K5 दहंत त, B4 प्रदहति; D6 प्रदहतस् (for प्रदहन्ति). B3 पुनस् (for ततस्) ]

34 Dn1 D2 om. 34a (cf v l 231*) —a) G2 सैन्यानि (for [अ]नीकानि) —b) S त्वदीयानि विशां पते —d) B3 Dc1 Dn1 D4 T G M1 2 दिव्य- (Dn1 दिवा-; G5 महा)भ्राणीव मारुत

C. 7 1337
B. 7. 30. 36
K. 7. 30. 36

महेष्वासं नरव्याघ्रं नोग्रं कश्चिदवारयत् ॥ ३५
ते हन्यमानाः पार्थेन त्वदीया व्यथिता भृशम् ।
स्थानेव बहवो जग्मुर्विद्रवन्तस्ततस्ततः ॥ ३६
तेऽर्जुनेन शरा मुक्ताः कङ्कपत्रास्तनुच्छिदः ।
शलभा इव संपेतुः संवृण्वाना दिशो दश ॥ ३७
तुरगं रथिनं नागं पदातिमपि मारिष ।
विनिर्भिद्य क्षितिं जग्मुर्वल्मीकमिव पन्नगाः ॥ ३८
न च द्वितीयं व्यसृजत्कुञ्जराश्वनरेषु सः ।
पृथगेकशरारुग्णा निपेतुस्ते गतासवः ॥ ३९

हतैर्मनुष्यैस्तुरगैश्च सर्वतः
शराभिवृष्टैर्द्विरदैश्च
तदा श्वगोमायुवडाभिनादितं
विचित्रमायोधशिरो बभूव
पिता सुतं त्यजति सुहृद्वरं सुहृ-
त्तथैव पुत्रः पितरं शरातुरः ।
स्वरक्षणे कृतमतयस्तदा जना-
स्त्यजन्ति वाहानपि ॥ ४१ ॥

इति श्रीमहाभारते द्रोणपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

35 35ᵃᵇ = 7. 27. 11ᵃᵇ. — ᵇ) B (except B1) Dc1 G6 -चर्ष (for -वर्ष-). Ś K D1.4 शरौघिन (for °घिणम्). — ᶜ) D1.2 महेष्वासा (for °ष्वासं). Ś1 Dc1 (before corr) D6 नरव्याघ्र; K4 °व्याघ्रो, D3 °व्याघ्रा (for °व्याघ्रं). — 35ᵈ = 7. 27. 11ᵈ. — ᵈ) K6 नोग्रे; B4 G1 नोग्र. (for नोग्रं). K3 G6 किंचिद्; D3 केचिद् (for कश्चिद्). D3 अवारयन्; G3 M6 न्यवारयत् (for अवा°).

36 ᵃ) Ś1 अपोह्यमाना.; Ś1 K (except K1) D1 अ(D1 आ)मुह्य° (for ते हन्य°). — ᶜ) D6 8 बहुशो (for बहवो).

37 ᵃ) Dn3 D8 6 S अर्जुनेन (for तेऽर्जु°). S [इ]षवो (for शरा). — ᶜ) K4 B1 सलभा (for शलभा). K6 D6 निप्पेतु°, D4 ते पेतु° (for संपेतु°). — ᵈ) D7 दिशः (for दश)

38 ᵃ) Dc1 Dn3 D4 T G (except G4) M1 3 तुरंग. — ᵇ) Ś K (except K6) D1 अथ (for अपि) — ᶜ) Ś1 विमथ्य च; Ś1 K1.3 4 D1 विनद्य (K1 °त्य) च; S ते निर्भिद्य (for विनि°). D6 क्षय (for क्षितिं). — ᵈ) T G M1 3 4 5 सु(M4 5 स)पुरवा कर्दमं यथा; M3 सपुंखा इव कर्दम.

39 ᵃ) K1 D8 5 व्यसृजन्; T G6 विसृजत् (for व्यसृ°). — ᵇ) Ś K1 3.4 Dn1 D1 8.5 6 रथेषु (for नरेषु). B3 Dn1 D8 6 T G1.3 4 M च; G6 वा (for स). D4 7 8 कुञ्जराश्वरथं प्रति — ᶜ) S व्यस्तम् (for पृथग्). D8 4.6 एव (for एक). K6 Dn1 D2.5 -शराभग्ना; D8 6 शरैर्भुग्ना (for शरारुग्णा) — पेतुस्ते तु (for निपेतुस्ते).

40 ᵃ) Ś K (except K6) D1 ततो, T G1-5 (for हतैर्). K1 मानुषैस् (for मनुष्यैस्). K1 ... (submetric); B Dc1 द्विरदैश् (for तुरगैश्). D (for च). Dc1 Dn D8.6 सर्वदा (for °तः). — K1 -वर्षैर्; K4.5 -सृष्टैर्; B Dc1 Dn3 D2.8.6 ... D4 -वृष्ट (for -वृष्टैर्). B Dc1 च हयैर् (for द्विरदैश्) Ś1 च सर्वतः; B Dc1 निपातितै (for च पा°) S ... भिसृष्टैश्च गजैर्निपातितैः. — ᶜ) K3 8 Dc1 तदाशु, 7 8 तदा च; D4 तदा हि, S सृगाल- (for तदा श्व-). Ś1 -वडाभि-; Ś1 K3 D1 बटाभि-; K1 वयाभि; K3-5 B Dc1 Dn3 D7 3.4 T1 G3 -वलाभि, D6 -वृकाभि; D8 -बटाभि; T1 वलाभि, G1 2 4 M वळाभि, G5 -चलाभि (for -वडाभि). Ś1 -नर्दित (for नादितं). — ᵈ) K3 आयोप-; K4 आयोधि (for आयोध) D1 -शरैर् (for -शिरो). Ś1 K1 8 Dn1 D2 3 6 T G2 8 M8 lacuna, B Dc1 Dn3 D8 तत् (for ह).

41 ᵃ) K6 त्यजति सुतं (by transp). Dc1 पुत्र (for सुतं) T G1-4 M सखा सखाय, G6 सखा सखं तथा (for सुहृद्वरं सुहृत्). — ᵇ) K1 पुत्रा°; M2 पुत्र (for पुत्र). Ś K (except K6) D1 शराहत. (K1 °ताः); B1 °र्दित, T G2-5 M4 °तुरं (for °तुर) — ᶜ) Ś K1 8 D1 आरक्षणे (for स्वर°). S (except G2) मन सस् (for मतयस्) G1.8 M तथा (for तदा) जनस्, D4.8 S (except G3)

# ३०

धृतराष्ट्र उवाच ।
तेष्वनीकेषु भग्नेषु पाण्डुपुत्रेण संजय ।
चलितानां द्रुतानां च कथमासीन्मनो हि वः ॥ १
अनीकानां प्रभग्नानां व्यवस्थानमपश्यताम् ।
दुष्करं प्रतिसंधानं तन्ममाचक्ष्व संजय ॥ २
संजय उवाच ।
तथापि तव पुत्रस्य प्रियकामा विशां पते ।
यशः प्रवीरा लोकेषु रक्षन्तो द्रोणमन्वयुः ॥ ३
समुद्यतेषु शस्त्रेषु संप्राप्ते च युधिष्ठिरे ।
अकुर्वन्नार्यकर्माणि भैरवे सत्यभीतवत् ॥ ४
अन्तरं भीमसेनस्य प्रापतन्नमितौजसः ।
सात्यकेश्चैव शूरस्य धृष्टद्युम्नस्य चाभिभो ॥ ५
द्रोणं द्रोणमिति क्रूराः पाञ्चालाः समचोदयन् ।
मा द्रोणमिति पुत्रास्ते कुरून्सर्वानचोदयन् ॥ ६
द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चापरे ।
कुरूणां पाण्डवानां च द्रोणद्यूतमवर्तत ॥ ७

C 7 1250
B 7 31 7
K 7 31 7

Colophon — *Sub parvan* Editions संशप्तकवध — Day of Drona's Generalship Ś1 K2 द्वितीयदिवस (K3 °स), K7 8 D1 द्वितीययुद्धदिवस — *Adhy name* K6 Dn1 D2 6 गांधारपराजये (Dn1 °य) (K6 adding वृषकार्च[?च]लवध), G1 M1.2 शकुनिपराजय — *Adhy. no* (figures, words or both) B1.2 Dn1 D2 6 S 29 (as in text) — *Śloka no* Dc1 41, Dn1 38

## 30

1 ᵇ) G4 पुत्रेषु (for पुत्रेण) — ᶜ) D2 प्रस्थितानां, D6 प्रद्रुतानां (for द्रुताना च) — ᵈ) D1.6 G1 M1 2 आसन् (for आसीन्) Ś1 हि नो मन, K2 3 मनो हि न, Dn3 D2 6 S मनांसि व (for मनो हि व).

2 ᵇ) B Dc1 Dn1 D2 3 6 C3 d अवस्थानम्; D1 7 8 ह्यवस्था°, S अधिष्ठा° (for व्यवस्था°) B5 प्रपश्यतां — After 2ᵃᵇ, B1 3 Dc1 (marg *sec m*) Dn1 D2 6 ins

232* अत परं रणे सूत किमकुर्वन्त मामका ।

[ Dn1 च ते (for रणे) B1 मानवा (for मामका). ]

— ᶜ) K4 -संधानां; Ca d संधानं (as in text)

3 ᵃᵇ) S ते तथा (G5 °दा) हतभूयिष्ठास्तव प्रियहितैषिण — ᶜ) D2 रय; T G2-5 सर्वे; G1 M सर्वे (for यश) S लोकस्य (for लोकेषु) — ᵈ) K1-3 B1 क्षरतो, T G2 3 5 रक्षणे; G4 रक्षिणो (for रक्षन्तो) Dn1 S (except G5) मन्ययु (for अन्वयु).

4 ᵃ) B4 चास्त्रेषु (for शस्त्रेषु). — ᵇ) B3 संप्राप्तेषु (for °ते च) D2 प्रियकामा विशा पते (= 7 30 3ᵇ), Cv as in text — ᵈ) Ś1 K (except K6) D1 भमीरुवत्, S अविक्रमा (for अभीतवत्)

5 ᵃ) D1 7 8 अनीके (for अन्तर) — ᵇ) D1.6 पातयन्; D2 प्रापित (for प्रापतन्) — ᶜ) D1 7 8 चापि (for चैव) B Dc1 वीरस्य (for शूरस्य) S सत्यकस्य च वीर(G1 M1 2 भीम)स्य — ᵈ) Ś1 K5 D2 6 चाभिभो, K1 B Dc1 Dn1 D1 6 वा (K1 चा) विभो; D1 7 8 चाभिभौ (D1 °भौ), S पार्थिव (T G2-4 °वा, G5 °व) (for चाभिभो)

6 ᵃ) B1 (marg as in text) Dc1 S क्रुद्धा (for क्रूरा) — ᵇ) Some MSS पंचाला (for पाञ्चाला) D2 6 समवोपयन्, D1 7 8 °नोदयन्, M2-5 °चूचुदन् (for °चोदयन्) — ᶜ) S ते पुत्रा (by transp) — ᵈ) D6 om (hapl) from कुरू up to कुरू (in 7ᵃ) Ś1 K1 अचोदयत्, K5 D2-5 7 8 अनोदयन् (D2 °त्) (for अचोदयन्) S स्वसैन्य समचोदयन् (G1.5 [before corr] M1 2 °चूचुदन्), G5 (by corr) शूरा सैन्यमचूचुदन्

7 D6 om. up to कुरू (cf v 1 6) — ᵃ) S पांडवा द्रोणमि(G5 °न्याम इ)त्येव (T G2-4 °व) — ᵇ) Dn2 वा (for च) — ᶜ) T G2-4 पाडवानां कुरूणां च — ᵈ) Ś1 K4 द्रोणे, K1-3 द्रोणो; T2 G3 4 द्रोण, G5 द्रोणाद् (for द्रोण) G1 M1 2 भूतम्, G6 युद्धम् (for -द्यूतम्) Dn1 D5 अवर्तयत्; Dn2 तदाभवत् (for अवर्तत)

8 ᵃ) B Dc1 D1 T G1.3 4 M प्रमयते, B1

समासाद्य तु पाण्डूनामनीकानि सहस्रशः ।
द्रोणेन चरता संख्ये प्रभग्नानि शितैः शरैः ॥ १६
तेषु प्रमथ्यमानेषु द्रोणेनाद्भुतकर्मणा ।
पर्यवारयदासाद्य द्रोणं सेनापतिः स्वयम् ॥ १७
तदद्भुतमभूद्युद्धं द्रोणपाञ्चाल्ययोस्तदा ।
नैव तस्योपमा काचित्संभवेदिति मे मतिः ॥ १८
ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम् ।
शरस्फुलिङ्गश्चापार्चिर्दहन्कक्षमिवानलः ॥ १९
तं दहन्तमनीकानि द्रोणपुत्रः प्रतापवान् ।
पूर्वाभिभाषी सुश्लक्ष्णं स्मयमानोऽभ्यभाषत ॥ २०
नील किं बहुभिर्दग्धैस्तव योधैः शरार्चिषा ।
मयैकेन हि युध्यस्व क्रुद्धः प्रहर चाशुगैः ॥ २१
तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् ।
व्याकोशपद्माभमुखं नीलो विव्याध सायकैः ॥ २२
तेनातिविद्धः सहसा द्रौणिर्भल्लैः शितैस्त्रिभिः ।
धनुर्ध्वजं च छत्रं च द्विषतः स न्यकृन्तत ॥ २३
सोत्प्लुत्य स्यन्दनात्तस्मान्नीलश्चर्मवरासिधृक् ।
द्रोणायनेः शिरः कायाद्धर्तुमैच्छत्पतत्रिवत् ॥ २४

C 7 1287
B 7 31 24
K 7 31 24

---

(for संख्ये). — d) S [अ]मितै (for शितै) D4 7 भग्नानि निशितै शरै

17 a) T प्रमग्नमानेषु (for प्रमथ्य°) — c) D3 प्रत्यवारयद्, M3 4 पर्यवात्रयद् (for °वारयद्) — d) Ś1 D4 G4 सेनापतिं (for °पति) Ś1 तदा, D2 6 तथा (for स्वयम्)

18 a) S तद्युद्धमभवद्धोरं — b) K2 3 B3 5 Dn2 D1-4.6 7 S पाचाल्योस् (for पाञ्चाल्ययोस्) B3 भवि, B4.5 Dn2 D1 6 तथा, S प्रभो (for तदा) — c) K5 तस्यौपम (for तस्योपमा) K1.2 G5 कश्चिद् (for काचिद्) — d) K5 B D (except D1) इति मे निश्चिता मति ; S ह्यस्या (T G2 5 °स्त्या) वक्तु विशेषत

19 a) Ś K Dn1 D2-8 तथा (for ततो) Cv as in text — b) S प्राद्हत (for ददाह) — c) Dc1 D5 स्फुलिंग (for -स्फुलिङ्गश्). K1 3 चापाग्निर्; G4 कोपार्चिर् (for चापा°) — d) B1 2 Dc1 Dn1 महत्, Dn2 D2 6 T2 G3 4 शुष्क, T1 G1.2 5 M शुष्क (for दहन्) Ś1 कक्ष्यम्, G5 वनम् (for कक्षम्)

20 a) G5 दहत तान्यनीकानि — K4 D1 om. 20c–21d. — c) Ś K1 2 5 Dn2 D3 6 G1 पूर्वाभिलापी (K5 °षी); Dn1 पूर्वमासाद्य, G5 स्मिताभिभाषी (for पूर्वा°) Ś K1-3 D5 6 8 सुश्लक्ष्ण; Dn2 श्लक्ष्ण स (for सुश्लक्ष्णं) — d) S इद वचनमब्रवीत्

21 K4 D1 om 21 (cf v l 20) — a) Ś1 बहुधा, K5 Dn D3 5 6 8 पुरुषैर् (for बहुभिर्) Dc1 मग्नैस् (for दग्धैस्) — b) M3-5 transp तव and योधै G1.3 4 M यौधै (for योधै) S (except M3-5) शताचिके (for शरार्चिषा) — c) M1 (before corr) 2 मयैनेन (for °केन) B1 S [ए]व; Dn1 [इ]-ह, D3 च (for हि) D4 युद्धस्तत् (for युध्यस्व) — d) Ś K1-3 D1 7 8 चाशुगान्; B Dc1 चाशु मां, Dn2 चाशु वै, D2.6 चाहवे (for चाशुगै) T G2-5 सक्रुद्ध प्रहराशुगै

22 K5 om 22a–23b — b) Ś1 पद्मपत्रायतेक्षण; D1 पद्म**निभे° — c) B (except B3) Dc1 Cd व्या कोप ; T G2 व्या(G3 सा)क्रोश (for व्याकोश) Ś1 K1 B2 (orig) Dn2 T G3 3.5 M4 Cd v पद्माभि- (for -पद्माभ) B Dc1 D3 6 मुखो; Cd -मुखं (as in text) Ś1 K2 व्याकोशपद्मवदन (K2 °सुमुखं) — d) B1 3 4 D8 शायकै, S पत्रिभि (for सायकै)

23 K5 om. 23ab (cf v l 22) — a) B3 D3 [अ]भि, B4 [अ]पि (for [अ]ति) S प्रहसन् (for सहसा) Dn2 तेन विद्धस्तु सहसा — b) Dn2 D4 7 M2 द्रोणिर्, D4 *णिर् (for द्रौणिर्) B5 Dn1 G2-4 transp शितै and त्रिभि Dn2 D4 7 8 सितैस्, G1 M त्रिभिस् (for शितैस्) B1.5 (marg) शरै (for त्रिभि) — c) B4 सत्व (for छत्रं) D5 ध्वजं छत्र धनुश्चैव — d) K1 2 सन्यकृतत; K5 स न्य(? नि) कृष्टवान्; Dc1 Dn1 स (Dn1 सं) निकृंतत; D4 7 सत्य कृंतत (for स न्यकृन्तत)

24 a) Ś1 D6 M3-5 प्लाप्लुत्य (D6 °त); K5 B2-4 Dc1 Dn1 D3 स प्लुत (Dn1 D3 °त्य), B1 5 स द्रुत; Dn2 मोद्रुवत् (for सोत्प्लुत्य) Ś1 K1-4 D1 सोवप्लुत्य रथात्तस्मान् — b) Ś K2 3 -धृत्, K1 4 B Dc1 D1 2 G1 M1.2 भृत् (for -धृक्) — c) Ś1 K B Dn D2 3 6 द्रौणायने (for द्रोणा°) — d) Ś1 कर्तुम्, K2 D1 हतुम् (for हर्तुम्) K5 Dn इच्छत् (for ऐच्छत्). K4 5 पतत्रवत्; Cd पतत्रि° (as in text)

तस्योद्यतासेः सुनसं शिरः कायात्सकुण्डलम् ।
भल्लेनापाहरद्द्रौणिः स्मयमान इवानघ ॥ २५
संपूर्णचन्द्राभमुखः पद्मपत्रनिभेक्षणः ।
प्रांशुरुत्पलगर्भाभो निहतो न्यपतत्क्षितौ ॥ २६
ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला ।
आचार्यपुत्रेण हते नीले ज्वलिततेजसि ॥ २७
अचिन्तयंश्च ते सर्वे पाण्डवानां महारथाः ।
कथं नो वासविस्त्रायाच्छत्रुभ्य इति मारिष ॥ २८
दक्षिणेन तु सेनायाः कुरुते कदनं बली ।
संशप्तकावशेषस्य नारायणबलस्य च ॥ २९

इति श्रीमहाभारते द्रोणपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

# ३१

संजय उवाच ।
प्रतिघातं तु सैन्यस्य नामृष्यत वृकोदरः ।
सोऽभिनद्बाह्लिकं षष्ट्या कर्णं च दशभिः शरैः ॥ १
तस्य द्रोणः शितैर्बाणैस्तीक्ष्णधारैरयस्मयैः ।

---

25 a) K2 [उ]द्धतासे ; K4 [उ]धतांस° (corrupt), Dn1 [उ]स्रतांस (for [उ]द्यतासे ). Ś1 नीलस्य, D8 सुभृत; S चरत (for सुनसं). — b) D7 सुकुदल°. — c) Do1 Dn2 D4 7 G1 5 M [अ]पहरद् (for [अ]पा° ) K1 D1 द्रोणि , D4 द्रोण° (for द्रौणि° ) — d) K4 अनघ°.

26 a) Ś1 Do1 Dn1 D6 M5 स (for सं ) Ś1 Dn2 D3 4 7 8 G1 M1 2 -चद्राभि-, D6 -चद्राति- (for -चन्द्राभ ) D4 7 8 मुख, G2 निभ° (for -मुख ) Ś2 K1 2 4 D1 स( K1 D1 स )पूर्णे( K1 °र्वं )चद्रप्रतिम — c) D7 पांशुर् (for प्रांशुर्). Ś1 B3 4 D2 S -पत्राभो (for -गर्भाभो) — d) Dn1 निहितो (for निहतो). D4 7 8 व्यपतत् (for न्यप° ) Ś1 S भुवि (for क्षितौ)

27 a) Dn1 तस्य (for तत° ). K3 G1 M सा (for प्र ) Dn1 व्यथिता ; D4. 7 8 -भग्ना सा ; T G2–4 व्यथते (for -विव्यथे ). — b) K5 Dn D2 3. 5 6 अर्दिता ; S आतुरा (for आकुला ) — d) Ś2 K1 2 4 B Do1 Dn1 D1 ज्वलन (for ज्वलित ).

28 a) S ते यतते यथा( G1 M परं )शक्त्या. — b) S रथर्षभा° (for महारथा° ) — c) Ś K1 4 D1 नोपाय वित् (for नो वासविस्) D5 6 G5 प्रायात् (for त्रायात्) Cv कथ वो वास्वस्तिनायात् (sic) — d) K4 D1 2 G5 इव (for इति). K4 D1. 7 मारिषः

29 a) S पक्षेण (for सेनाया° ). — b) Ś K (except K5) D1 4 महत् (for बली ). — c) Some MSS. संसप्तकावशेपस्य.

Colophon — *Sub-parvan* Editions संशप्तकवध — *Day of Drona's Generalship* Ś1 K1 2 द्वितीय दिवस° , K3 द्वितीययुद्धदिवस°. — *Adhy name* K5 Dn1 D2 5 T G (except G4) M1. 2 नीलवध°. — *Adhy. no* (figures, words or both) K2 B1 2 Dn1 D2 S 30 (as in text), K5 28. — *Śloka no* Dn1 29

## 31

1 a) S सैन्यानां — b) D4 नामर्षत (for नामृष्यत) — c) Ś1 D2 5 7 8 सोभ्यहन् ( D2 °द् ), K4 Dn1 °भ्यघ्नन्, B1–4 Do1 सोहनद्, D4 सोभ्यनद् ; S अभि( G4 °ह )नद् (for सोऽभिनद् ). B5 Dn2 D3–6 सोभ्याहनद्गुरु षष्ट्या ( Dn2 D3 वृद्ध ) — d) D5 निशितै (for दशभि° ) S शरै° कनकभूषणै. — After 1, B2 ins line 2 of 233*.

2 B4 om (hapl ) 2–4, B3 reads 2–4 on marg — a) M3 4 द्रौणि (for द्रोण ) K4. 5 शतैर् ; D4 6 7 8 सितैर्. — b) K5 D5 अयोमुखै°, B ( B4 om ) Do1 Dn2 D3 6 अजिह्मगै ; D2 अयोमयै° ; S सुतेजनैः ( G1 M °जितै ) (for अयस्मयै° ) — d) Ś K2 5 Dn2 D1 3–5 7 8 मर्माणि D3 [ए]व (for [आ]शु ) K3 तं (for ह) D6 मर्माण्येवाजघान ह, S मर्मण्यभ्य ( T G2–4 M3 °प्यभि , G5 °स्वभ्य )हनद्बली. — After 2, B ( B4 om. ) Do1 Dn2 D3–6 ins

233* आनन्तर्यमभिप्रेप्सुः षड्विंशत्या समार्पयत् ।
पुनश्चाग्निसमस्पर्शैराशीविषविषोपमैः ।

जीवितान्तमभिप्रेप्सुर्मर्मण्याशु जघान ह ॥ २
कर्णो द्वादशभिर्बाणैरश्वत्थामा च सप्तभिः ।
षड्भिर्दुर्योधनो राजा तत एनमवाकिरत् ॥ ३
भीमसेनोऽपि तान्सर्वान्प्रत्यविध्यन्महाबलः ।
द्रोणं पञ्चाशतेषूणां कर्णं च दशभिः शरैः ॥ ४
दुर्योधनं द्वादशभिर्द्रौणिं चाष्टाभिराशुगैः ।
आरावं तुमुलं कुर्वन्नभ्यवर्तत तान्रणे ॥ ५
तस्मिन्संत्यजति प्राणान्मृत्युसाधारणीकृते ।
अजातशत्रुस्तान्योधान्भीमं त्रातेत्यचोदयत् ॥ ६
ते ययुर्भीमसेनस्य समीपममितौजसः ।
युयुधानप्रभृतयो माद्रीपुत्रौ च पाण्डवौ ॥ ७
ते समेत्य सुसंरब्धाः सहिताः पुरुषर्षभाः ।
महेष्वासवरैर्गुप्तं द्रोणानीकं बिभित्सवः ॥ ८
समापेतुर्महावीर्या भीमप्रभृतयो रथाः ।
तान्प्रत्यगृह्णादव्यग्रो द्रोणोऽपि रथिनां वरः ॥ ९
महाबलानतिरथान्वीरान्समरशोभिनः ।
बाह्यं मृत्युभयं कृत्वा तावकाः पाण्डवान्ययुः ॥ १०
सादिनः सादिनोऽभ्यघ्नंस्तथैव रथिनो रथान् ।

C 7 1383
B 7 32 11
K. 7 32 11

[ B4 Dn2 D5. 6 transp lines 1 and 2 — (L 1) B5 Dc1 Dn2 D5 समर्पयत्, D3 समाछत (for °र्पयत्) — B1-3 Dc1 D4 5 om. line 2 B2 ins line 2 after stanza 1 ]

3 B4 om. 3 (cf. v l. 2), B3 reads it on marg — b) D2 5 [अ]पि (for च) — c) T G2-5 पश्चा (for षड्भिर्) — d) K5 भीमम् (for एनम्) Dc1 Dn1 D4-6 अवाकिरन्, Bom. ed अथाकिरत् (for अवा°). S स एनं (G5 °तं) समवारयन्

4 B4 om. 4 (cf. v l 2), B3 reads it on marg — a) Ś1 बाणै, D4 lacuna (for सर्वान्) — b) K1 प्रतिविध्य; Dc1 D4 7 8 प्रति(Dc1 °त्या)विध्यन् (for प्रत्य°) — D5 om. 4c-5b — c) Ś1 K1 D4 7 पञ्चशता (for पञ्चा°) S सद्भि (for [इ]पूणां) — d) S कर्णं षड्विंशता शरै

5 D5 om. 5ab (cf v l 4) — b) K2 5 B1 Dn1 D7 8 द्रोण, D1 G5 द्रोणि (for द्रौणिं) Ś1 K2 5 B1 Dc1 (by corr ) Dn1 D1 2 4 7 8 चाष्टभिर्; K1 चाशु°, K3 B4 S अष्टा°; K4 स्वष्टा°, B3 (marg as in text) पंचा° (sic), Dn2 वै षड्भिर् (for चाष्टाभिर्) Dn2 D2 8 एव च (for आशुगै) D6 द्रौणिमष्टभिसै शरै — The portion of the text from 7 31 5c up to 7 33 7b in Ś1 is lost on missing folios — c) K4 D1 M3 4 आरवं (for आराव) K5 Dc1 D2 4 5 7 8 तुमलं; Dn1 विपुल (for तुमुलं). — d) D4 अभ्यवर्तत S अभ्यवर्पत्स तान्पुन

6 Ś1 missing (cf v l. 5) — a) Dn2 सजयति (for सत्यजति) — b) Dn2 D6 मृत्यो (for मृत्यु-) K (except K5) D1 4 साधारणे; S °रण (for °रणी-) S गते (for -कृते). — c) K1 3 Dc1 T G2-5 M1 2 स्वान् (for तान्) S (except G1) वीरान् (for योधान्) — d) B4 lacuna, D6 (by corr ) पातेति (for त्रातेति) D4 6-8 [अ]नोदयत् (for [अ]चोद°)

7 Ś1 missing (cf v l 5) — a) S [ऽ]गच्छन् (for ययौ) — c) S सौभद्रो युयुधानश्च — d) T G1-3 5 M1 2 भ्रातरौ, G4 M3-5 भारतौ (G4 °त) (for पाण्डवौ)

8 Ś1 missing (cf v l 5). — a) Ś1 K1-3 D1 भीमसेत्य (for ते स°) Dn2 स; D4 च, S (except G5) तु (for सु) T G1, 3 4 M सयत्ता, G5 सयुक्ता (for -संरब्धा) — b) T G2-4 समतात्; G5 सचित्ता (for सहिता) — c) Ś1 K3 4 B4 गुप्ता, D2 गुप्तैर् (for गुप्त) — d) K3 Dn2 T1 G5 बिभत्सव

9 Ś1 missing (cf. v. l 5) — a) M2 समापेत (for °पेतुर्) Dn1 महावीरा, S नरव्याघ्रा (for महावीर्या) — b) Dn2 D3 6 भीमवेगा महारथा — c) Dn2 D3 6 अत्युग्रो (for अव्यग्रो) G5 प्रत्यगृह्णात्तथा-व्यग्रो — d) Ś1 बलिनां, D6 धन्विना (for रथिना)

10 Ś1 missing (cf v l 5) — ab) K3 5 B Dc1 Dn2 D1, 3 6 महारथानतिबलान् (for a) K5 B Dc1 Dn D2 3. 5 6 -योधिन (for -शोभिन ) S प्रत्य दृश्यत पार्थाना स्वेपामपि महारथा — c) K4 B2 D1 2 त्यक्त्वा; Cd कृत्वा (as in text) — d) Ś1 K Dn2 D1 3-6 पाण्डवास्तावकान्य(Ś1 K1, 2 °कानि)यु, D2 7 8 पाण्डवास्तावका ययु; Bom ed तावकान्पाण्डवा ययु Cd cites ययु (as in text), Cdp वयु

11 Ś1 missing (cf v l. 5) — a) K (except K5) D1 न्यघ्नस्, Dn1 जघ्नुस्, T G2 3 [ऽ]भ्यापन्

आसीच्छक्त्यसिसंपातो युद्धमासीत्परश्वधैः ॥ ११

निकृष्टमसियुद्धं च बभूव कटुकोदयम् ।

कुञ्जराणां च संघातैर्युद्धमासीत्सुदारुणम् ॥ १२

अपतत्कुञ्जरादन्यो हयादन्यस्त्ववाक्शिराः ।

नरो बाणेन निर्भिन्नो रथादन्यश्च मारिष ॥ १३

तत्रान्यस्य च संमर्दे पतितस्य विवर्मणः ।

शिरः प्रध्वंसयामास वक्षस्याक्रम्य कुञ्जरः ॥ १४

अपरेऽप्यपराञ्जघ्नुर्वारणाः पतितान्नरान् ।

विषाणैश्चावनिं गत्वा व्यभिन्दन्रथिनो बहून् ॥ १५

नराश्चैः केचिदपरे विषाणालग्नसंस्रवैः ।

बभ्रमुः शतशो नागा मृद्नन्तः शतशो नरान् ॥ १६

कांस्यायसतनुत्राणान्नराश्वरथकुञ्जरान् ।

---

(sic), $G_4$ ष्ठापन् (for ऽभ्यघ्नन्). $G_1$ M सादिनोभ्य-व्रचन्सादीन्. —$^b$) S (except $G_3$) अभ्यघ्नन् (for तथैव). $G_1$ $M_{1, 2}$ रथीन् (for रथान्). —$^c$) $Ś_1$ $K_3$ $D_{1, 4}$ दाक्त्यभि ; $K_1$ $D_{7, 8}$ दाक्त्याभि , $K_4$ शक्तिनि ; $B_3$ (marg) $Dn_1$ शक्त्यष्टि (for दाक्त्यसि). $Dn_2$ -संपातैर् (for सपातो). S असिशक्त्य($G_{1, 5}$ M °क्त्यृ)-ष्टिसघातैर् —$^d$) S चा($M_{3-5}$ त्वा)सीत् (for आसीत्). Some MSS परस्वधै..

12 $Ś_2$ missing (of v l. 5). —$^{ab}$) $K_3$ $B_1$ (marg) $_{2-4}$ $Do_1$ प्रकृष्टम्; $Dn_2$ $D_3$ निसृष्टम्; $D_3$ निक्षष्टम् (sic) (for निकृष्टम्). $Dn_2$ अभि-; $D_{3, 6}$ अपि (for असि). $D_6$ (by corr *sup lin sec m*) तद् (for च). $K_5$ कटकोदयं (for कटु°). S प्रवृद्ध ($G_1$ $M_1$ °त्त ; $M_2$ °ष्ट)मासीत्तद्युद्ध मतत रोमहर्षण. — After $12^{ab}$, $Do_1$ ins.:

234* कुञ्जराणां च संपातो बभूव कटुकोदयः ।

—$^c$) S तु (for च) $B_1$ सघातैर्; $B_{2-4}$ S संपातैर्; $Do_1$ सपाते (for सघातैर्). —$^d$) S आ($M_{1, 2}$ अ)स गस्तुमुलोभवत्.

13 $Ś_2$ missing (of v. l. 5). —$^a$) K (except $K_5$) $D_1$ आपतत्, T $G_{1, 3, 4}$ $M_{1, 2, 5}$ अपतन् (for अपतत्) S (except $G_3$) अन्ये (for अन्यो). —$^b$) $Dn_1$ [ऽ]पि (for तु) S ह($G_5$ $M_{3-5}$ म)यादन्ये प्रदु द्रुवु° —$^c$) $K_5$ $D_5$ रणे; $B_1$ नाना ; $Do_1$ S नरा (for नरो). $K_3$ $B_{2, 4}$ $D_{2, 3}$ बाणवि ; $Do_1$ रणे वि (for बाणेन) $K_1$ सभिन्नो; $Do_1$ $D_4$ निर्भिन्ना; S सविद्धा (for निर्भिन्नो) $B_3$ नाराचबाणनिर्भिन्नो; $B_5$ न(? ना)राचेन विनि° —$^d$) $Dn_2$ $D_{3, 6}$ भारत (for मारिष) S रथादन्येपतन्क्षितौ.

14 $Ś_2$ missing (cf. v l 5) —$^a$) $D_{5, 7}$ तथा (for तत्र) T $G_2$ समामर्दं ($G_3$ संमर्दित-) रथाश्चापि, $G_{1, 3, 4}$ M संममर्दं रथाश्चापि; $G_5$ स ममर्द रथे क्षिप्रं. —$^b$) $K_5$ $D_{2, 5}$ $G_1$ M [अ]पि वर्मिण ; $Dn_2$ विवर्मिण°; $D_{3, 6}$ विचर्म($D_6$ °र्मि)ण°; T $G_{3, 4}$ [अ]पि वर्मनि; $G_2$ [अ]पि वर्मन (for विवर्मण°). $G_5$ रथाश्चापि समंतत° —$^d$) $D_3$ आहत्य; $D_6$ आहत्य; $G_1$ M आनम्य (for आक्रम्य). M कुचरान् —After 14, $M_4$ reads $17^{cd}$.

15 $Ś_2$ missing (cf v. l 5) —$^a$) $D_2$ चापरान्; $G_5$ $M_{3-5}$ [ऽ]पि प°; $M_{1, 2}$ न्यप° (for ऽप्यप°) S मृद्नन् (for जघ्नुर्). B $Do_1$ $Dn_2$ $D_{3, 6}$ अपरांश्चापरेमृद्नन् —$^b$) $K_1$ $D_{2, 4}$ वारणान्, $B_5$ वारणै , $G_1$ M कुजरा° (for वारणा°) $K_1$ पातितान् (for पति°). $K_{1, 3}$ $D_2$ $G_5$ रथान् ($G_5$ °त्); $K_4$ $Dn_2$ वरान् (for नरान्). $Ś_1$ वारणात्पतिता नरा°; $B_4$ अपरे वारणान्वरान्; $D_5$ वारणानपि ताश्रणे —$K_1$ om (hapl) $15^c$–$16^d$. $D_3$ om $15^c$–$16^b$ $D_4$ om (hapl) $15^c$–$17^b$ $K_4$ reads $15^c$–$17^b$ on marg. —$^c$) $Dn_2$ $D_3$ चावनीं; S धरणीं (for चावनिं) T $G_{3, 4}$ भित्त्वा (for गत्वा) —$^d$) $Ś_1$ न्यनिंदन्; $K_2$ भिंदतो; $K_4$ विदर, $K_5$ $Do_1$ $Dn_2$ $D_5$ व्य($K_5$ वि)मृद्नन्; $B_1$ न्यभिनद्; $D_6$ प्रभिन्न ; $D_{7, 8}$ विभिंदन् (for व्यभिन्दन्) $Ś_1$ $K_{2, 3}$ $D_1$ वसु°; $K_4$ भुवि (for वहून्) S रुवतो (T $G_{2-4}$ रवंतो, $G_1$ $M_1$ रुवते; $M_2$ रुदते) भैरवान्नवान्.

16 $Ś_2$ missing (cf. v l 5) $K_1$ $D_4$ om. 16, $D_3$ om $16^{ab}$ (for all, cf v l 15). $K_4$ reads 16 on marg. —$^{ab}$) $Ś_1$ $K_{3, 4}$ $D_1$ नरा($K_{3, 4}$ °रां)श्च (for नराश्चै) $Ś_1$ सश्रवै (by corr °वा); $K_3$ $B_4$ $Do_1$ $Dn_1$ -सश्रयै , $D_5$ संचयै ; $D_6$ संहतै°, $D_7$ सशय (for सस्रवै). S नरान($M_{3-5}$ आदाया)न्ये विषाणाग्रै र्भ्रामयित्वा क्षतै. परै (T₁ $G_2$ क्षितैः परै°; $M_{3-5}$ क्षतान्प रान्) —$^c$) $Do_1$ $D_{3, 6}$ वभूवु ($D_6$ °मु), S भ्रमति (for बभ्रमु). $K_3$ B $Dn_2$ $D_1$ समरे, S रुपिता (for शतशो) $D_5$ $G_1$ $M_{1, 2}$ नागान् —$^d$) $B_4$ समरे (for शतशो). $B_5$ बहून्; $D_{2, 7}$ $T_1$ परान्, $T_2$ $G_{3, 4}$ वरान् (for नरान्).

17 $Ś_2$ missing (cf. v l 5) $D_4$ om. $17^{ab}$ (cf v. l 15) $K_4$ reads $17^{ab}$ on marg —$^a$) $Ś_1$ $K_{1, 2}$ कांस्यायत ; $K_{4, 5}$ B $Do_1$ Dn $D_{1-3, 6}$ कार्ष्णायस ; $D_5$ (before corr. as in text, marg *sec. m.*) सान्या°

7 1819
7 41 17
7 45 17

स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम् ।
सुनसं सुभ्रु केशान्तं शिरोऽहार्षीत्सकुण्डलम् ।
लक्ष्मणं निहतं दृष्ट्वा हा हेत्युच्चुक्रुशुर्जनाः ॥ १७
ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते ।
हतैनमिति चुक्रोश क्षत्रियान्क्षत्रियर्षभः ॥ १८
ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ १९
स तान्विद्ध्वा शितैर्बाणैर्विमुखीकृत्य चार्जुनिः ।
वेगेनाभ्यपतत्क्रुद्धः सैन्धवस्य महद्बलम् ॥ २०

आवव्रुस्तस्य पन्थानं गजानीकेन दंशिताः ।
कलिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्यवान् ।
तत्प्रसक्तमिवात्यर्थं युद्धमासीद्विशां पते ॥ २१
ततस्तत्कुञ्जरानीकं व्यधमद्धृष्टमार्जुनिः ।
यथा विवान्नित्यगतिर्जलदाञ्शतशोऽम्बरे ॥ २२
ततः क्राथः शरव्रातैरार्जुनिं समवाकिरत् ।
अथेतरे संनिवृत्ताः पुनर्द्रोणमुखा रथाः ।
परमास्त्राणि धुन्वानाः सौभद्रमभिदुद्रुवुः ॥ २३
तान्निवार्यार्जुनिर्बाणैः क्राथपुत्रमथार्दयत् ।

---

D5 उद्धरर्ष; Cs d उद्यर्ह (as in text) Ś2 D2 महाबाहो (for °बाहुर्)

17 b) G1 M लक्षणस्य D2 लक्ष्मण शुभदर्शनं — c) S (except T G2) सुनास D2 5 शु(D5 सु)भ्र (for सुभ्रु) — After 17cd, S reads 11 followed by a repetition of 12ab — e) G1 M लक्षण Dn1 श्रुत्वा (for दृष्ट्वा). — f) D2 हत (for हा हा). — After 17, K3 D7 8 ins

316* स भ्रातॄन्राजपुत्रांश्च कुमारस्यानुयायिनाम् ।
जघान बाणैः सौभद्रः सहस्राणि चतुर्दश ।
षष्टिं रथसहस्राणि सप्त नागशतानि च ।

[(L 1) K2 अनुयायिन (for °यायिनाम्) ]

18 a) K5 राजा (for क्रुद्ध). — b) Ś1 D1 प्रिय (for प्रिये). — c) B1 Dn2 D7 8 S Cd हत (for हत) K1 चुक्रुशु; D2 (marg) सक्रोधी (for चुक्रोश) — d) Ś1 क्षत्रिय; Ś1 K3 क्षत्रिया; D2 चुक्रोश (for क्षत्रियान्). Ś1 B1 3 Dc1 क्षत्रियर्षभ; K1 3 भरतर्षभ (K3 °भ); Dn1 पुरुषर्षभ (for क्षत्रिय°)

19 b) D7 8 द्रोणिश्चैव; G1 M स(G1 M1 2 द्र)-भ्रात्मा (for द्रोणपुत्रो)

20 a) Ś K1-4 D1 2 6-8 तांस्तु; K5 Dn D2 5 तांश्च (for स तान्). Ś1 भित्त्वा (for विद्ध्वा). Dn1 D7 8 शितैर् (for शितैर्) — b) D7 8 सोर्जुनि (for चार्जुनि). — c) Dn2 D5 T G M1 2 [अ]भ्यद्रवद्, D2 8 [अ]भ्यपतद् (for [अ]भ्य°) — d) T G1-4 M5 (sup lin as in text) सैंधव च (for °वस्य). D2 T G1-4 महाचमू; D2 8 बृहद्बल (for महद्बलम्)

21 b) G1 हस्तानीकेन (for गजा°). S दंशिता. Ś K (except K5) D1 सौभद्रस्य महात्मन (Ś2 °बला) — c) Ś1 K2 कलिंगास्, Dn2 D1 कालिंगा(D1 ग)श् (for कलिङ्गाश्) Ś1 तु (for च). Ś K2 D1 निषादश्च (for °दाश्च). — d) K1 Dc1 G2 पुत्राश् (for पुत्रश्) — ef) K5 B Dc1 Dn1 D2 प्रतप्तम् (for प्रसक्तम्) Dn2 D6-8 अत्यन्त (for अत्यर्थं) S तैर्नदद्भिर्यथादित्यो घनैश्छन्नो विशां पते.

22 a) D2 5 स (for तत्) — b) D2 व्यथयद् (for व्यधमद्) — c) Ś2 यथा; K4 Dn1 D1-3 5 6 8 वायुर्; K5 यस्तो (sic), B1 (marg) वह्नो; B1 (also marg) गच्छन्; B2 4 वहन्, T G3 4 [अ]खिलान्; G1 M1 2 विवस्वान् (hypermetric), G5 लिख (sic) (for विवान्) Ś1 K1-3 B5 Dn2 G2 यथाविधानि(B5 Dn2 G2 °धाभि)त्यगतिर् — d) K1 3 om जलदान्. Ś2 [ऽ]परान्, K1 D1 [ऽ]परे; Dc1 युधि; D6 रणे (for ऽम्बरे).

23 a) D7 8 तथा (for ततः). Ś1 G5 क्रुद्धः; Ś2 K1 3 D (D4 missing, Dc1 D5 [by corr]) T G1-4 M5 क्राथ (for क्राथ) B1 शरैर् (for व्रातैर्) B4 शत धारासमातैर् — b) Ś K1 3 D (except D1 2, D4 missing) T G1-5 M5 आर्जुनि (for आर्जुनिं). B2 4 5 G1 3 5 M समवारयत् (for °किरत्). — d) Dn2 तथा (for रथाः). — Ś2 K1 4 D1 om 23cd D6 om 23e—24b. K3 reads 23cd on marg — e) K3 B1 (marg. as in text) 2 Dc1 S (except G5) Cd सन्वाना; D7 8 कुर्वाणा (for धुन्वाना)

24 D6 om 24ab (cf v l 23) — b) S अपोथयत् (for अथार्द°). — c) Ś1 K1 2 4 D1 स(K4 स)-रौघेन (for °घेण). Ś K D1, 2 6, 7 S सप्र(Ś2 °प्य)मे

शरौघेणाप्रमेयेण त्वरमाणो जिघांसया ॥ २४
सधनुर्बाणकेयूरौ बाहू समुकुटं शिरः ।
छत्रं ध्वजं नियन्तारमश्वांश्चास्य न्यपातयत् ॥ २५
कुलशीलश्रुतबलैः कीर्त्या चास्त्रबलेन च ।
युक्ते तस्मिन्हते वीराः प्रायशो विमुखाभवन् ॥ २६

इति श्रीमहाभारते द्रोणपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## ४६

धृतराष्ट्र उवाच ।
तथा प्रविष्टं तरुणं सौभद्रमपराजितम् ।
कुलानुरूपं कुर्वाणं संग्रामेष्वपलायिनम् ॥ १
आजानेयैः सुबलिभिर्युक्तमश्वैस्त्रिहायनैः ।
प्लवमानमिवाकाशे के शूराः समवारयन् ॥ २

संजय उवाच ।
अभिमन्युः प्रविश्यैव तावकान्निशितैः शरैः ।
अकरोद्विमुखान्सर्वान्पार्थिवान्पाण्डुनन्दनः ॥ ३
तं तु द्रोणः कृपः कर्णो द्रौणिश्च सबृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ४

C. 7 1854
B 7 47 4
K. 7 47 4

येन ( for °मेयेण )

25 [a]) D4 केयूरो ( for केयूरौ ) —[b]) D5 बाहु°, G3 बाहौ ( for बाहू ) K1 D8 सु ( for स ) G1 3 4 M -मकुटं ( for मुकुट ) —[c]) Dc1 ध्वजं छत्र ( by transp ), M1 2 छत्रध्वजं. Ś K Dn D1-3 5-8 सच्छत्र- ( D8 °छिन्न )ध्वजयन्तार —[d]) Ś K B4 D ( except Dc1, D4 missing, D7 om ) रथ ( for अश्वांश् ) Bom. ed चाश्वान् ( for चास्य ) D7 8 निपातयत्

26 D8 om. 26. —[a]) B4 5 श्रुति ( for श्रुत- ) S -धनै ( for -बलैः ) —[b]) S कान्त्या ( for कीर्त्या ). K1 T G2-4 शस्त्र ; D3 चास्य ( for चास्त्र ) —[c]) K3 D2 3 5 युद्धे ( for युक्ते ) D8 6 ह्यस्मिन् ; G1 तस्य ( for तस्मिन् ) G3 मृते ( for हते ) T G2-4 M3-5 शूरा° ; G4 M5 ( sup lin ) शूरे ( for वीरा° ) —[d]) Dn2 D8 6 ययौ ( for [अ]भवन् )

Colophon D4 missing —*Sub-parvan* Ś K ( except K4 ) B Dc1 Dn1 D1. 3 अभिमन्युवध —*Day of Drona's Generalship* Ś1 तृतीयदिने ; K1 3 तृतीय युद्धदिवसे ; K2 तृतीये दिवसे —*Adhy name* K5 D5 लक्ष्मणवध ; Dn2 D8 6 अभिमन्युयुद्ध ; D2 क्राथवध° —*Adhy no* ( figures, words or both ) B1. 2 Dn1 S 45 ( as in text ), D2 42 —*Śloka no* Dn1 27

46

☞ This adhy is missing in D4 ( cf v 1 7 44 16 )

1 [a]) Ś1 यथा, B5 अथ ( for तथा ) K4 त्वरित ( for तरुण ) —[b]) S सौभद्र रथिना वर —[c]) S ( except G1 M1 2 ) कुलानुरूपकर्माण —[d]) Bom ed [अ]पराजित ( for °लायिनम् )

2 [a]) Ś K1 2 आजानीयै° ; Dn1 आजानयै°, Dn2 D1 6 Cd अजानेयै° ( for आजा° ) B2 च ; Dn स ( for सु ) Ś1 T G2-5 बहुभिर् ( for बलि° ) —[b]) K3 5 B Dc1 Dn1 D2 5 S यां( D2 या )तम् ( for युक्तम् ). D8 6 G1 M1 2 त्रिहायणै —[c]) S अनीकानि ( for इवाकाशे ) —[d]) Ś1 वीरा ( for शूरा° ) K4 5 B ( except B4 ) Dc1 Dn1 D2 5 8 S पर्यवारयन् ( for सम° )

3 [a]) Ś K1 3 D1 7 [प्र]तांस्, K4 Dn2 D3 8 [प्र]-तांस्, K5 Dn1 M3-5 [प्र]व ( for [प्र]व ) —[cd]) Bom ed transp विमुखान् and पार्थिवान् D5 ( by corr, *sec m.* as in text ) तावकान् ( for पार्थिवान् ) ; S बलवान्पाण्डवात्मज°

4 [a]) Dn1 तं च ; D8 ततो ; S पुनर् ( for त तु ). —[b]) K3 चाथ ; T G2-4 सह ( for च ह- ).

7 1883
7 47 5
7 47 5

दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितम् ।
सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् ॥ ५
सौभद्रमितरे वीरमभ्यवर्षञ्शराम्बुभिः ।
तालमात्राणि चापानि विकर्षन्तो महारथाः ॥ ६
तांस्तु सर्वान्महेष्वासान्सर्वविद्यासु निष्ठितान् ।
व्यष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ॥ ७
द्रोणं पञ्चाशता विद्ध्वा विंशत्या च बृहद्बलम् ।
अशीत्या कृतवर्माणं कृपं षष्ट्या शिलीमुखैः ॥ ८
रुक्मपुङ्खैर्महावेगैराकर्णसमचोदितैः ।
अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ॥ ९
स कर्णं कर्णिना कर्णे पीतेन निशितेन च ।
फाल्गुनिर्द्विपतां मध्ये विव्याध परमेषुणा ॥ १०
पातयित्वा कृपस्याश्वांस्तथोभौ पार्ष्णिसारथी ।
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ११
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां पश्यतामवधीद्बली ॥ १२
तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ।
वरं वरममित्राणामारुजन्तममीतवत् ॥ १३
स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष ।
पश्यतां धार्तराष्ट्राणामश्वत्थामानमार्जुनिः ॥ १४
षष्ट्या शराणां तं द्रौणिस्तिग्मधारैः सुतेजनैः ।
उग्रैर्नाकम्पयद्विद्ध्वा मैनाकमिव पर्वतम् ॥ १५

---

5 $M_8$ om $5^{c}$–$6^{b}$ — $^{a}$) $K_5$ श्रुत्वा (for दृष्ट्वा). $G_5$ च (for तु) — $^{b}$) $K_5$ $Dn_1$ समर्पित (for समाहितम्). — $^{c}$) $D_{7, 8}$ सैन्यास् (for सैन्य). — $^{d}$) S (except $G_1$, $M_8$ om) अभिद्रवत् (for उपा°)

6 $M_8$ om. $6^{ab}$ (cf v l 5) — $^{a}$) $Ś_1$ $D_{5, 6}$ अपरे, $K_4$ $D_1$ इति ते; $G_5$ अपि ते (for इतरे) $Ś_1$ राजन्; $Dn_1$ $D_5$ S ($M_8$ om) वीरा (for वीरम्) — $^{b}$) $K_5$ अतिमात्र समर्पितं; $Dn_1$ अभ्यवर्षञ्शितै शरै°; S ($M_8$ om) रथव्याघ्रास्त्वयोध( $G_5$ °योथ; $M_4$ °वार)यन् — $^{d}$) $B_{1, 4}$ महाबला; S वधैषिण° (for महारथा)

7 $^{a}$) T $G_{2-4}$ महेष्वास (for °ष्वासान्) — $^{b}$) $K_5$ पारगान्, $D_5$ [अ]धिष्ठितान्, $D_{7, 8}$ [अ]नुष्ठि° (for निष्ठि°) $D_2$ सर्वान्दिव्यास्त्रनिष्ठित. — $^{c}$) $Dn_2$ $D_{5, 6}$ व्यदारयद् (for व्यष्टम्भ°) — $^{d}$) S मुहूर्तमिव ($G_5$ °र्तमपि, $M_{3, 4}$ °र्तादिव) भारत.

8 $^{a}$) $K_3$ $D_{2, 5}$ $M_{1, 2}$ पंचशता (for पञ्चा°) $K_{3, 5}$ B D (except $D_1$, $D_4$ missing) [अ]विध्यद् (for विद्ध्वा) — $^{b}$) S त्रिंशता (for विंशत्या) — $^{d}$) S शितै शरै° (for शिलीमुखै°) $Dn_1$ षष्ट्या बाणै° कृप यथा

9 $G_5$ om 9–10 — $^{a}$) $M_{1, 2}$ रुक्म (for रुक्म). S ($G_5$ om) प्रसन्नाग्रैर् (for महावेगैर्). — $^{b}$) $K_5$ $Dn_1$ °पूरितै°; $D_{6-8}$ नोदितै (for चोदितै°) $Ś_1$ आकर्णमय चोदितै°; S ($G_5$ om) °मभिनि°सृतै° — $^{c}$) $B_5$ (marg) अभिक्ष्यद् (for अविध्यद्)

10 $10^{c}$ = 7. 47 $1^{a}$. $G_5$ om 10 (cf v l. 9) $D_2$ om $10^{c}$–$11^{b}$. — $^{a}$) T $G_{2-4}$ कर्णं च (for स कर्णं). — $^{b}$) $G_1$ $M_{1, 2}$ तीक्ष्णेन (for पीतेन) $B_4$ $G_2$ च शितेन (for निशि°) $D_5$ ह (for च)

11 $D_2$ om $11^{ab}$ (cf v l 10). — $^{a}$) $B_2$ $Dc_1$ घातयित्वा, $G_4$ ताप° (for पात°) $D_5$ तु तस्य (for कृपस्य). — $^{b}$) Ś $K_{1, 4}$ $D_1$ तयोस्तौ, S उभौ च (for तथोभौ). $Ś_1$ प्राष्टि, $K_1$ प्रार्दि; $D_1$ प्रार्ष्णि-; $G_{1, 2}$ M प्राष्टि; $G_{3, 4}$ प्राष्टि (for पार्ष्णि) — $^{c}$) $D_2$ कर्णं च नवभिर्बाणै°

12 $^{a}$) $G_{3-5}$ शृङ्गारकं — $^{b}$) $D_5$ प्रीति (for कीर्ति) — $^{c}$) S (except $G_1$ $M_{1, 2}$) शूराणां (for वीराणां). — $^{d}$) $D_{6-8}$ बलं; S पुन (for बली)

13 $^{b}$) $Ś_1$ $K_1$ क्षुद्रकानां Ś $K_{1-3}$ सम( $Ś_1$ °मा) र्दयत्; $K_{4, 5}$ B (except $B_2$) $Dc_1$ $D_{1, 6}$ (before corr) समार्प° (for समर्प°) — $D_3$ om (hapl) $13^{cd}$ — $^{c}$) $K_5$ $Dn_1$ $D_{2, 5, 6}$ एव वक( $D_2$ वश)म्; T $G_{2-5}$ पर परम्; $G_1$ $M_{2-5}$ वल परम् (for वर वरम्) — $^{d}$) $Dn_2$ $D_{3, 6}$ पातयतम् (for आरुजन्तम्)

14 $^{a}$) $D_7$ om. from स तु up to धारै° (in $15^{b}$) $D_{3, 6}$ बाण (for बाणै°) $D_{3, 5, 8}$ सितैस्; $D_{3, 6}$ -शातैस् (for शितैस्) $Ś_1$ तीक्ष्णै; $K_2$ कर्णं (for तूर्णं) — $^{b}$) $D_{5, 8}$ प्रत्यविध्यत्स्तनान्तरे; $G_5$ °ध्यदभीतवत्

15 $D_7$ om up to धारै° (cf v. l 14) — $^{a}$) S सं द्रौणिर्वि( $G_2$ द्रोण वि)शिखै° षष्ट्या. — $^{b}$) $K_{1-4}$ $D_1$ विष्वग्वातै., $K_5$ Dn $D_{2, 3, 5, 6}$ $G_1$ M तिर्यग्धारै°; $Dc_1$ $D_8$ तिर्यग्बाणै°; T $G_{2-5}$ तीक्ष्णधारै° (for तिग्म°). $D_{3, 5, 8}$ सुतेजसै.. — $^{c}$) $Ś_1$ $K_1$ $Dn_2$ $D_{1, 3, 6-8}$ विद्धो;

स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः ।
प्रत्यविध्यन्महातेजा बलवानपकारिणम् ॥ १६
तस्मिन्द्रोणो बाणशतं पुत्रगृद्धी न्यपातयत् ।
अश्वत्थामा तथाष्टौ च परीप्सन्पितरं रणे ॥ १७
कर्णो द्वाविंशतिं भल्लान्कृतवर्मा चतुर्दश ।
बृहद्बलस्तु पञ्चाशत्कृपः शारद्वतो दश ॥ १८
तांस्तु प्रत्यवधीत्सर्वान्दशभिर्दशभिः शरैः ।
तैरर्द्यमानः सौभद्रः सर्वतो निशितैः शरैः ॥ १९
तं कोसलानामधिपः कर्णिनाताडयद्धृदि ।
स तस्याश्वान्ध्वजं चापं सूतं चापातयत्क्षितौ ॥ २०
अथ कोसलराजस्तु विरथः खड्गचर्मधृत् ।
इयेष फाल्गुनेः कायाच्छिरो हर्तुं सकुण्डलम् ॥ २१
स कोसलानां भर्तारं राजपुत्रं बृहद्बलम् ।
हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् ॥ २२
बभञ्ज च सहस्राणि दश राजन्महात्मनाम् ।
सृजतामशिवा वाचः खड्गकार्मुकधारिणाम् ॥ २३
तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे ।
विष्टम्भयन्महेष्वासान्योधांस्तव शराम्बुभिः ॥ २४

C 7 1864
B 7 17 24
K 7 47 24

इति श्रीमहाभारते द्रोणपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

$K_5$ विध्यन्; $D_2$ धीमान्; $D_5$ वीर (for विद्धा) —[d]) $Dn_2$ $D_{5\ 6}$ मैनाक इ( $D_5$ °कमि )व पर्वत

16 [a]) $G_3$ द्रोणं (for द्रौणिं) —[b]) S तिर्यग्धारै र्महायशा॰ —[c]) S महारथो (for °तेजा) —[d]) T $G_{2-5}$ $M_{3-5}$ माश ; $G_1$ $M_{1\ 2}$ माशु (for अप)

17 [a]) $D_{2\ 6}$ शर (for बाण) S तस्मिन्द्रोण शिता न्बाणान् —[b]) Ś $D_5$ गृध्नो, $K_{1-3}$ Dn $D_{1\ 3\ 7\ 8}$ गृद्धो; $D_2$ $G_5$ -गृध्नुर्; $D_5$ गृध्व (sic), $G_3$ गृध्नी, $G_4$ गृध्नि (for -गृद्धी) $G_1$ $M_{1,2}$ न्यवारयत् (for न्यपात°) —[c]) S पुन (for तथा) $K_5$ $Dn_1$ $D_{2\ 5}$ [अ]ष्टौ तु; $B_{1-3}$ $D_{c1}$ S षष्टिं (for [अ]ष्टौ च) —[d]) S वधात् (for रणे)

18 [a]) $K_1$ द्वाविंशतं, $D_{3\ 5\ 6}$ द्वाविंशतिर्; S द्वात्रिंशत ( $G_1$ $M_{1\ 2}$ °शो ) (for द्वाविंशतिं) Ś K (except $K_5$) $D_1$ बाणान् (for भल्लान्) —[b]) Bom ed. च विंशतिं (for चतुर्दश) —[c]) $D_{2\ 7\ 8}$ च (for तु) $Dn_2$ $D_{5\ 6}$ पञ्चाशत च ( $Dn_2$ तु ) कौशल्य

19 [a]) T G $M_{1\ 2}$ प्रत्य( $G_1$ $M_{1\ 2}$ °स्या )क्षिपत्; $M_{3-5}$ प्रत्याहनत् (for प्रत्यवधीत्). — Ś K (except $K_3$) $D_1$ om. (hapl.) 19[cd], $B_3$ reads it on marg. —[c]) $K_5$ $Dn_1$ $D_{5\ 7\ 8}$ तैर( $Dn_1$ तम )र्द्यमानं सौभद्रं; S वध्यमान स( $G_5$ $M_{4\ 5}$ °नस्तु ) सौभद्रो —[d]) S रुद्र क्रुद्ध पशूनिव

20 [a]) N (except Ś $K_{3\ 4}$; $D_4$ missing) कोशला नाम्; T $G_{2\ 5}$ कौसला° (for कोसला°) $B_1$ $D_{3\ 5}$ S (except $G_1$ $M_{1\ 2}$) अधिप —[b]) $D_2$ कार्ष्णिमाताडय द्युधि, T $G_{2-5}$ कर्णिनापातयद्रथात् —[c]) S तस्याश्वा नार्जुनिश्चापं —[d]) $G_2$ रथात् (for क्षितौ).

21 [a]) Some MSS कोशल- (for कोसल) S को ( T $G_{2\ 4\ 5}$ कौ )सलानामधिपतिर् —[b]) S (except $G_5$) चर्मखड्ग (by खड्गचर्म) $Ś_1$ $K_1$ $Dn_2$ $D_{7\ 8}$ T $G_{1\ 3}$ $M_{1\ 2}$ धृक्, $K_5$ B $D_{c1}$ $Dn_1$ $D_{2\ 3,\ 5\ 6}$ $M_{3-5}$ भृत् (for धृत्) —[c]) S (except $G_5$) चार्जुने (for फाल्गुने). $G_1$ M कोपात् (for कायात्) —[d]) $D_1$ हंतु (for हर्तुं)

22 [a]) $Dn_1$ सं (for स) Some MSS कोशलानां Bom ed आधिप (for भर्तार) B S कोस( B कोश ; T $G_{1\ 2\ 4\ 5}$ $M_4$ कौस )लानां तु ( $B_{4,\ 5}$ स ) भर्तार —[b]) $Ś_1$ (sup lin as in text) महाबलं (for बृहद्बलम्) —[c]) S हृद्यवि( $G_4$ प्रत्यवि ; $M_{1\ 2}$ हृदि वि )ध्यत्पृ( $M_{1\ 2}$ °न्पृ )षत्केन ( $G_{3\ 4}$ °ण ) —[d]) $G_{1\ 3\ 4}$ $M_{1\ 2}$ स (for स) $B_{1-3}$ $D_{c1}$ $Dn_2$ T G $M_{1\ 2}$ छिन्न (for भिन्न)

23 [a]) $Ś_1$ $K_{1-4}$ स बभञ्ज; T $G_{2\ 4\ 5}$ $M_{3-5}$ अभ ञ्जंत; $G_1$ $M_{1\ 2}$ अभजत; $G_3$ अमथंत (for बभञ्ज च) $D_3$ स (for च). —[b]) $D_3$ तत्र (for दश). $K_3$ B $D_{c1}$ $Dn_2$ $D_{5\ 6}$ राज्ञां (for राजन्). —[c]) $D_3$ सृजतामसिधारां च

24 [a]) $D_7$ om. from चरद् up to कर्णो (in 7 47 1)

# ४७

7 1665
7 48 1
7 48 1

संजय उवाच ।
स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः ।
शरैः पञ्चाशता चैनमविध्यत्कोपयन्भृशम् ॥ १
प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः ।
स तैराचितसर्वाङ्गो बह्वशोभत भारत ॥ २
कर्णं चाप्यकरोत्क्रुद्धो रुधिरोत्पीडवाहिनम् ।
कर्णोऽपि विबभौ शूरः शरैश्चित्रोऽसृगाप्लुतः ॥ ३
तावुभौ शरचित्राङ्गौ रुधिरेण समुक्षितौ ।
बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ ॥ ४
अथ कर्णस्य सचिवान्षड् शूरांश्चित्रयोधिनः ।
साश्वसूतध्वजरथान्सौभद्रो निजघान ह ॥ ५
अथेतरान्महेष्वासान्दशभिर्दशभिः शरैः ।
प्रत्यविध्यदसंभ्रान्तस्तदद्भुतमिवाभवत् ॥ ६
मागधस्य पुनः पुत्रं हत्वा षड्भिरजिह्मगैः ।

---

— b ) K4 विचरद्; D5 व्यद्रवद्; D8 व्याचरन् (for व्यचरद्) · D3 इव (for रणे) — c ) B1 विस्तम्भयन्; B3-5 Dn1 D5.8 T G2-5 व्यष्टम्भ° (for विष्टम्भ°) B2 D1 महेष्वासो (for °ष्वावान्) — d ) Dn1 पुत्रांस् (for योधांस्). S मोहयन्निव भारत

Colophon om in D7 D4 missing — *Sub-parvan* Ś K1-3 5 B Do1 Dn1 D1 2 5 8 अभिमन्युवध — *Day of Drona's Generalship* Ś1 तृतीय दिने; K1 3 तृतीययुद्धदिवसे; K2 तृतीये दिवसे; G2 तृतीयेऽह्नि — *Adhy name* K5 D3 5 G2 वृषसेनवध; Dn2 D8 6 अभिमन्युयुद्ध. — *Adhy no* (figures, words or both) B1 2 Dn1 S 46 (as in text) — *Śloka no* Do1 Dn1 24

## 47

1 D4 missing up to त वि (in 14c) (cf. v. l. 7 44 16) D7 om 1a (cf v l 7 46 24) Ś1 om the ref. — a ) = 7 46 10a Ś कर्णं (for कर्णे) S तत कर्णं समासाद्य. — b ) S रणे (for पुनर्) T G1 2 विव्याध — c ) Dn1 D1 पञ्चशता. B2 D7 पुनम् (for एनम्). — d ) B1 Dn2 S द्रुत (for भृशम्)

2 D4 missing (cf v l. 1) D5 reads 2ab on marg — a ) T विव्याध (for विव्याध) — b ) Ś1 2 (*sup lin*) K1 2 D1 तस्त्रिर्; Ś1 (orig) स्तस्त्रिर् (for ताव°). — c ) B Do1 Dn D8 6 T G2.4 शरैर्; G2 रथैर्; G5 स पै (for स तैर्) K5 B2 Dn1 D2 आवृत; T G2-4 विकृत्त; G1 5 (before corr) विचित्र; G6 (by corr.) विध्वस्त, M1 2.4 5 (orig) प्रविद्ध (for आचित) M2 4 (*sup lin*) स तैर्विद्धो महाबाहुर् — d ) D7 om from शोभत up to चित्राङ्गौ (in 4a). Dn1 मारिष (for भारत).

3 D4 missing (cf v l 1) D7 om 3 (cf. v l 2) — a ) G5 तं चैव (for कर्णं च) S युद्धे (for क्रुद्धो) — b ) D2 3 रुधिरापीड (for °रोत्पीड) Ś1 वाहन°; B1 धारिण (for वाहिनम्) S रुधिरौघपरिप्लुतं. — c ) D5 स कर्णोऽपि (for कर्णोऽपि वि). T G M1.2 कर्णस्त्वति (G1 M1 2 °स्तु वि)बभौ तस्मात्; M3-5 कर्णश्च विबभौ तत्र. — d ) K5 D6 (by corr) G1 M3-5 छिन्नो; G3 4 चित्रैर्; G6 (marg) विद्धो (for चित्रो) K5 Dn1 [ऽ]ति भारत; G3 4 अभिप्लुत°; M2 [ऽ]सृगाप्लुतं (for °प्लुत). — After 3, S ins

317* संध्यानुगतपर्यन्त शारदीव दिवाकर ।
[ G1 M3-5 मध्यानुराग; Cv सध्यानुगत (as above) ]

4 D4 missing (cf v l 1). D7 om 4a (cf v l. 2) — a ) K5 B Do1 Dn1 तौ तथा, S तौ तदा (for तावुभौ) Ś1 द्विरथाङ्गौ; Ś2 भिन्नाङ्गौ (for चित्राङ्गौ) — b ) G2 रुधिरौघपरिप्लुतौ — c ) S बभतु कर्णसौभद्रौ

5 D4 missing (cf. v l 1). — a ) D5 6 विविधान् (for सचिवान्) — b ) S रथांश् (for शूरांश्). — d ) Dn1 साम् (for नि). S सौभद्रो न्य(T G1 ह्य, G2 [ऽ]स्य)हनद्बली

6 D4 missing (cf v. l 1). — a ) K5 B D (except D1, D4 missing) T G1 तथा (for अथ) G2 उत्तरान् (for इत°) — c ) S अविभ्रान्तस् (for असंभ्रान्तस्)

साश्वं ससूतं तरुणमश्वकेतुमपातयत् ॥ ७
मार्तिकावतकं भोजं ततः कुञ्जरकेतनम् ।
क्षुरप्रेण समुन्मथ्य ननाद विसृजञ्शरान् ॥ ८
तस्य दौःशासनिर्विद्ध्वा चतुर्भिश्चतुरो हयान् ।
सूतमेकेन विव्याध दशभिश्चार्जुनात्मजम् ॥ ९
ततो दौःशासनिं कार्ष्णिर्विद्ध्वा सप्तभिराशुगैः ।
संरम्भाद्रक्तनयनो वाक्यमुच्चैरथाब्रवीत् ॥ १०
पिता तवाहवं त्यक्त्वा गतः कापुरुषो यथा ।
दिष्ट्या त्वमपि जानीषे योद्धुं न त्वद्य मोक्ष्यसे ॥ ११
एतावदुक्त्वा वचनं कर्मारपरिमार्जितम् ।
नाराचं विससर्जास्मै तं द्रौणिस्त्रिभिराच्छिनत् ॥ १२
तस्यार्जुनिर्ध्वजं छित्त्वा शल्यं त्रिभिरताडयत् ।
तं शल्यो नवभिर्बाणैर्गार्ध्रपत्रैरताडयत् ॥ १३
तस्यार्जुनिर्ध्वजं छित्त्वा उभौ च पार्ष्णिसारथी ।
तं विव्याधायसैः षड्भिः सोऽपक्रामद्रथान्तरम् ॥ १४
शत्रुंजयं चन्द्रकेतुं मेघवेगं सुवर्चसम् ।
सूर्यभासं च पञ्चैतान्हत्वा विव्याध सौबलम् ॥ १५
तं सौबलस्त्रिभिर्विद्ध्वा दुर्योधनमथाब्रवीत् ।

C 7 1803
B 7 48 16
K 7 48 16

---

7 D4 missing (cf v l 1) —a) Ś K1–4 D1. 7 8 तव, K6 B6 तथा, B2 [आ]त्मन, D2 निज (for पुत्र) Dn2 सूत्र (for पुत्र) —d) T G3 4 मत्स्यकेतुम्, G2 मश्म (for मश्व) S अपोथयत्, G6 (sup lin) अवोध° (for अपात°)

8 D4 missing (cf v l 1) —a) Ś1 G3 4 मार्तिकावत(G3 4 °थ)कांभोज, K1 2 4 D1 मातिकावत (K4 D1 °ति)क भोज; K6 Dn1 D6 मा(Dn1 म)र्ति कावतिक भोज; D2 मार्तिकावतिकांभोज; D7 8 मल्लिका वतकांभोज —b) S पुन (for तत°) — After 8ab, M3–6 ins

318* मगधाधिपतेश्चापि जयत्सेनस्य वै शिर ।

[ M4 वा (for वै) ]

9 D4 missing (cf. v l 1) —a) K1 3 D1 दु शासनिर्

10 D4 missing (cf v l 1) —a) K1 दु शासनिं, Dn1 दौं शासन —c) T G1–4 M सरभ (for संरम्भाद्) G6 सरक्तनयनो वाक्यम् —d) G5 इदमुत्त रमब्रवीत्

11 D4 missing (cf v l 1) —a) D2 कृत्वा (for त्यक्त्वा) —b) D8 om (hapl) from गत° up to दुक्त्वा (in 12a) D7 तत (for गत°) —c) D6 विष्ट्या (for दिष्ट्या) D2 6 इह, D7 त्वपि (for त्वपि) —d) D2 योद्धुत्वं (for योद्धुं न) K2 4 6 Dn1 D1 2 5–7 मोक्षसे

12 D4 missing (cf v l 1) D8 om up to दुक्त्वा (cf v l 11) —b) Ś1 कदार- (for कर्मार) Ś1 कार्ष्णिरपरिमार्जितं, D7 कार्मुक परिमार्ज्य तत्, D8 कार्मुक परि*** —c) Dn1 [अ]सौ (for [अ]स्मै) —d) Ś K Dn1 D2, 7 8 द्रोणस्, Dn2 D5 द्रोणिस् (for द्रौणिस्) D2 3 6 G3–5 M अच्छिनत्

13 D4 missing (cf v l. 1) —a) S धनुश् (for ध्वज) — K1 3 4 D1 om (hapl) 13b–14a, K2 reads it on marg Dn1 D3 6 om. (hapl.) 13cd —c) S दशभिर् (for नव°) —d) S (except G6) गृध्र (for गार्ध्र) Ś पक्षैर् (for पत्रैर्). — Ś K2 (marg) 6 B Dc1 Dn2 D1 2 5 7 8 ins. after 13 Dn1 D3 6 after 13ab

319* हयसभ्रान्तवद्राजस्तदद्भुतमिवाभवत् ।

14 D4 missing up to त वि (cf v l 1) K1 3 4 D1 om 14a (cf v l. 13) K2 reads 14a on marg —a) B1–3 S धनुश् (for ध्वज) —b) Ś K1–4 B1–3 D1 2 6 हत्वा च, K6 B4 5 Dn D5 7 8 हत्वोभौ, Dc1 (by corr sec m) D2 तयोभौ; M3–5 उभौ तौ (for उभौ च) S (except T G2) प्राष्ठि- (for पार्ष्णि) —c) Ś [आ]यस, B2 (marg as in text) [आ]युधै°, D1 यत, D2, 4 6 रणे (for [आ]यसै°) K1 त विव्याधयित्व खड्गि° —d) Ś1 सोपाक्रामद्; Ś2 सोद°, B Dc1 D1 T G1–4 M4 5 सोपा° (for सोऽप°) K6 D7 8 रथांतरे; D4 रथांतरा

15 a) G6 शत्रुसैन्य च केतु च. —b) B (except B1) Dc1 महामेघ; G1 3, 4 M मोघवेगं; G6 मोघमेघ (for मेघवेग). —c) Ś K1, 3 D1 सूर्यवासं; K6 सूर्याभास (for सूर्य°). —d) D7 8 पचभिः (for सौब-लम्)

16 a) Ś1 K1 त सौभद्रस्, Ś2 G1 M1 2 सौबलस्त

7 1901
7 48 17
7 48 17

सर्व एनं प्रमश्नीमः पुरैकैकं हिनस्ति नः ॥ १६
अथाब्रवीत्तदा द्रोणं कर्णो वैकर्तनो नृपा ।
पुरा सर्वान्प्रमश्नाति ब्रूह्यस्य वधमाशु नः ॥ १७
ततो द्रोणो महेष्वासः सर्वांस्तान्प्रत्यभाषत ।
अस्ति वोऽस्यान्तरं कश्चित्कुमारस्य प्रपश्यति ॥ १८
अन्वस्य पितरं ह्यद्य चरतः सर्वतोदिशम् ।
शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत ॥ १९
धनुर्मण्डलमेवास्य रथमार्गेषु दृश्यते ।
संदधानस्य विशिखाञ्शीघ्रं चैव विमुञ्चतः ॥ २०
आरुजन्निव मे प्राणान्मोहयन्नपि सायकैः ।
प्रहर्षयति मा भूयः सौभद्रः परवीरहा ॥ २१
अति मा नन्दयत्येष सौभद्रो विचरन्रणे ।
अन्तरं यस्य संरब्धा न पश्यन्ति महारथाः ॥ २२
अस्यतो लघुहस्तस्य दिशः सर्वा महेषुभिः ।

---

(by transp.) K3 Dn1 हत्वा (for पिष्ट्वा) —$^{c}$) K1 5 G3 एव; Dn1 D7 8 एव; D2 एत (for एन) K4 5 B1 D4 प्रमश्नीम; B4 D3 5 7 विमश्नीम; S प्रमृद्नीम (G1 M1. 2 °म) (for प्रमश्नीम)

17 $^{ab}$) D4 om. from द्रोण up to ततो (in $18^{a}$). Dn1 अब्रवीच्च (for अथाब्रवीत्) B1 2 5 तथा; B4 पुनर्; D4 स्व*; S ततो (for तदा) D7 8 कर्णो द्रोण (by transp.) N (D4 om.) G3 रणे (for नृपा) —$^{c}$) G6 परान् (for पुरा) G1 M अस्मान् (for सर्वान्) S प्रमृद्नाति (for प्रमश्नाति) —$^{d}$) K6 स्व भूह्य (sic) (for ब्रूह्यस्य).

18 D4 om up to ततो (of v l 17) D5 repeats $18^{ab}$ after 20 —$^{a}$) D3 4. 6 G1 5 M1 2 महेष्वासान् (for °ष्वास°) —$^{c}$) K (except K5) D1 अस्ति वा, Dn1 अस्यतो (for अस्ति वो) K4 B5 D2 5 किंचित् (for कश्चित्). S नास्य (G5 °त्र) बाणांतरं कश्चित् —$^{d}$) Dn2 om (hapl) from प्रपश्यति up to चास्य (in $20^{a}$) Ś K1. 6 प्रपश्यतु; K2 4 Dc1 D2 °श्यत; D1 5 °श्यता°, G2 (sup lin. as in text) प्रकाशति; Bom. ed [अ]थ पश्यत (for प्रपश्यति).

19 Dn2 om 19 (cf. v l 18). Ś K (except K5) D1 om 19. —$^{a}$) D7 om (hapl) from पितर up to सदधानस्य (in $20^{c}$). B1 Dc1 (marg. sec m) अण्वस्य; D4 अन्पिस्य (corrupt), G3 अन्वास्य; Cv अन्यस्य; Ca d अन्वस्य (as in text). D4 वि*रं; Ca. d पितर (as in text). Dc1 D3 ह्यस्य; G3 चा*; Cv यस्य (for ह्यद्य). Dn1 क्रुद्धस्य तरसा चास्य; T G1-4 M अस्यतो (M1. 2 अन्यास्य) चिपरं (G2 °विधं) चास्य; Bom. ed. अण्वप्यस्यांतर ह्यद्य. —$^{c}$) D3 6 8 G5 शीघ्रता. —$^{d}$) S पांडवस्ये(G5 °स्यै)व (for °वेयस्य). Dn1 D3-6. 8 G1-4 5 (before corr.) M पश्यत; G5 (by corr.) दृश्यते (for पश्यत).

20 Dn2 om $20^{a}$ (cf v l 18), D7 om up to सदधानस्य (cf v l 19) — After $20^{ab}$, M3-5 ins

320* तमो ग्रस्त सुदीप्तस्य सवितुर्मण्डलं यथा ।

—$^{c}$) B1 सदधानस्य —$^{d}$) K (except K5) D1 S प्रमुचत; D7 8 [व्य]विमु° (for विमु°) — After 20, Ś1 K (except K4) ins

321* विकर्षतो धनु: श्रेष्ठ नान्तरं दृश्यते हि मे ।

while D4 repeats $18^{ab}$ after it.

21 Dn2 om $21^{a}$–$23^{b}$ —$^{a}$) B Dc1 D1 3 4 6-8 अपि (for इव) —$^{b}$) K4 5 Dn1 D2 5 T G1-4 M इव; D8 मम (for अपि) G5 मोहयित्वा हि (for °यन्निव) B (except B2) D8 शायकैः; Dn1 चाशुगैः; S सैनिकान् (for सायकैः) —$^{c}$) D3 4 6 G1-3 M सहर्षयति; D5 (by corr sec m) प्रधर्ष°, T G4 सघर्ष° (for प्रहर्ष°) N (except S1 K1 2, Dn2 om.) T G1-4 मां; M1 2 मे (for मा). T G1-4 M वीर (for भूय) G5 सघर्षति महावीर — G4 om $21^{d}$ K1 2 read $21^{d}$–$22^{a}$ twice

22 For the repetition in K1 2, cf v l 21 Dn2 om 22 (cf v l 21). —$^{a}$) K3 B Dc1 Dn1 D3 4 7 मां (for मा) Ś1 K2 3 (first time) 4 D1 G1 M1 2 4 Cv अतिमान ददात्ये(K3 °दत्ये, G1 M1 2 4 °धत्ये)ष, Ś1 K1 (first time) T G2-5 M3 5 अभि(K1 G5 M3 5 °ति)मान दधात्ये(K1 °दात्ये)ष, D5 अभि(by corr °ति)मान करोत्येष —$^{b}$) K1 2 विचरद्; D1 व्यचरन् —$^{c}$) D4 तस्य; D6 चास्य (for यस्य). D6 संधानं (for संरब्धा) —$^{d}$) D6 पश्यन्ति न (by transp)

23 Dn2 om $23^{ab}$ (cf v l 21) —$^{b}$) D7 8 शरान्परमदारुणान्. —$^{c}$) D3 G5 निर्विशेष (for न वि°).

न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः ॥ २३
अथ कर्णः पुनर्द्रोणमाहार्जुनिशरार्दितः ।
स्थातव्यमिति तिष्ठामि पीड्यमानोऽभिमन्युना ॥ २४
तेजस्विनः कुमारस्य शराः परमदारुणाः ।
क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः ॥ २५
तमाचार्योऽब्रवीत्कर्णं शनकैः प्रहसन्निव ।
अभेद्यमस्य कवचं युवा चाशुपराक्रमः ॥ २६
उपदिष्टा मया *अस्य पितुः कवचधारणा ।
तामेष निखिलां वेत्ति ध्रुवं परपुरंजयः ॥ २७
शक्यं त्वस्य धनुश्छेत्तुं ज्यां च बाणैः समाहितैः ।
अभीशवो हयाश्चैव तयोर्भौ पार्ष्णिसारथी ॥ २८
एतत्कुरु महेष्वास राधेय यदि शक्यते ।
अथैनं विमुखीकृत्य पश्चात्प्रहरणं कुरु ॥ २९
सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः ।
विरथं विधनुष्कं च कुरुष्वैनं यदीच्छसि ॥ ३०
तदाचार्यवचः श्रुत्वा कर्णो वैकर्तनस्त्वरन् ।

C 7 1915
B 7 48 31
K 7 48 31

---

— [d]) K1 Dn D1 e (before corr as in text) G2 -धन्विन (for -धन्वन)

24 [b]) D5 अथ (for आह) Ś1 B Dc1 T G1-3 -शराहत (for °र्दित) — [d]) G2 ताड्यमानो (for पीड्य°).

25 [c]) T G1-5 क्षिवति; Cd क्षिण्वन्ति (as in text) — [d]) K2 Dn1 शरा पावकवर्चसा; T G1-3 5 M घोरा पा(G5 °श्च पु, M1-5 °त्रा पा)वकव(T G2 3 °सुप्र) यथा; G4 स्तेकास्तु हि ** यया — After 25, D7 8 ins

322* हीनत्वात्क्षितिपालानां पश्यतामद्य च द्विज ।
न मेऽङ्ग हीयते किंचिन्न वै वागेति मां तथा ।
कुमारवरवीरस्य संतप्तपरमेषुभिः ।
बाणैरच्छिन्ननिर्मुक्तैः शल्यैरन्तर्गतं मम ।
विचिन्वद्भिरिवासून्मे शरीरं न विभाव्यते । [5]
कः किं किं स धनुर्वेदो येनैकेन वयं जिताः ।

[(L 2) D7 रह ते (for हीयते).]

26 [a]) D3 तं चाचार्यो (for तमा°) K4 Dn द्रोण (for कर्णं) — [b]) G1 M प्रहसन्दानकैरिव (M1-5 °र्दं) — [c]) D3 परस्य, D5 यस्य (for अस्य) S अभेद्य कवचं चास्य — [d]) D2 युधि (for युवा) Ś K1-3 Dn1 D2 चा(K3 शा)स्य (for चाशु-) S युवा च लघुविक्रम

27 [a]) S (except G5) उपदिष्टं (for °दिष्टा) Ś1 विद्या, Ś2 K B1-3 Dc1 D1 2 6-8 T G2 ह्यस्य; B4 5 Dn D3 5 G5 चास्य; D4 यस्य; G1 3 4 M [अ]प्यस्य (for *अस्य) — [b]) Ś -धारिणः; K (except K5) D1 धारिणी (K3 °णा); D4 -धारणात्; S -धारण (for -धारणा) — [c]) Ś K1-3 एव (for एष) S तदेष निखिलं वेत्ति — [d]) S (except G5) युवा (for ध्रुवं) — After 27, D7 8 ins.

323* ज्यालक्षण मया चेह नोपदिष्टं तु फल्गुने ।

28 [a]) Ś1 ह्यस्य, K5 च तद्, T G2-5 नास्य, G1 M1 2 त्वथ (for त्वस्य) — [b]) T G2-5 वा (for च) K5 सुमहितैः (for समा°) G1 M अस्यतो हि (M2 °तोस्य) महात्मनः — After 28[ab], G3 reads 31[c]-32[b] G5 om 28[c]-29[d] — [c]) Ś1 अभी*वो, B1-3 5 Dc1 (before corr) D1-6 अभीषवो; D3 अभितश्च (for अभीशवो) B1 Dc1 (by corr) Dn2 अभीषूंश्च हयांश्चैव, S (G5 om) अस्यतो लघुहस्तस्य — [d]) K2 पार्ष्टि-, K3 प्राष्टिं, K4 पार्ष्टिं, G1 3 प्राष्टि, G2 4 प्राष्टि- (for पार्ष्णि) M4 सारथिं (for सारथी)

29 G5 om. 29 (cf. v 1 28) G2 om 29[ab]. — [a]) D5 एवं (for एतत्). K4 महाराज (for महेष्वास) — [b]) Ś2 K (except K5) D1 G2 4 शक्यसे, Dn1 मन्यसे, D2 6 शक्य(D6 °क्ष)से (for शक्यते) — [c]) Ś2 Dn2 विरथीकृत्य — [d]) S (G5 om) तत (for पश्चात्)

30 [b]) Ś1 जेतुं सर्वैं (for अपि जेतुं) — [d]) Dc1 (by corr as in text) D2 4 5 यदिच्छसि (for यदी°). — After 30, D7 8 ins

324* विलक्षकरणं वा(? ना)द विमुखश्चप्रतो नृप ।
संधानकृतलक्षस्य किंचिद्व्याक्षिप्तचेतसः ।

[(L. 1) D5 कत (submetric) (for -करण) D7 धृप (for नृप)]

On the other hand, T G2-5 ins after 30

325* पुरः स्थितेन केनापि दुःशक्यो जेतुमार्जुनिः ।

31 [a]) D7 8 इति (for तद्) — After 31[ab], D7 8 ins

326* दृष्ट्वा सौभद्रमस्यन्तमुच्चैः हास्यमकुर्वत ।

अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छिनत् ॥ ३१
अश्वानस्यावधीद्भोजो गौतमः पार्ष्णिसारथी ।
शेषास्तु छिन्नधन्वानं शरवर्षैरवाकिरन् ॥ ३२
त्वरमाणास्त्वराकाले विरथं षण्महारथाः ।
शरवर्षैरकरुणा बालमेकमवाकिरन् ॥ ३३
स छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
खड्गचर्मधरः श्रीमानुत्पपात विहायसम् ॥ ३४
मार्गैः स कैशिकाद्यैश्च लाघवेन बलेन च ।
आर्जुनिर्व्यचरद्व्योम्नि भृशं वै पक्षिराडिव ॥ ३५
मय्येव निपतत्येष सासिरित्यूर्ध्वदृष्टयः ।
विव्यधुस्तं महेष्वासाः समरे छिद्रदर्शिनः ॥ ३६
तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम् ।
राधेयो निशितैर्बाणैर्व्यधमच्चर्म चोत्तमम् ॥ ३७
व्यसिचर्मेषुपूर्णाङ्गः सोऽन्तरिक्षात्पुनः क्षितिम् ।
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ॥ ३८
स चक्ररेणूज्ज्वलशोभिताङ्गो
बभावतीवोन्नतचक्रपाणिः ।
रणेऽभिमन्युः क्षणदासुभद्रः

नष्टलक्ष्यं कुमारोऽयं हन्यतां हन्यतामिति ।
तस्य चिन्तयमानस्य अभिमन्योर्महात्मनः ।

— G4 reads 31^e–32^b after 28^ab — ^d) S (except G6) पृषत्कौ (for पृषत्कैर्) D2 4 5 G1 3 M व्यच्छिनत्.

32 For sequence in G6, cf v l 31. — ^a) K2 S द्रोणो (for भोजो) — ^b) Ś1 K3 4 प्रा( K2 पा )र्ष्टि; S (except T G2) प्राष्टि (G3 4 'ष्टि) (for पार्ष्णि) — ^c) K6 Dn1 D2 5 द्रोणस्, G6 (marg) द्रौणिस् (for शेषास्). K6 च; S (except G6) त (for तु). D7 8 -वर्माण (for धन्वान). — ^d) D6 G6 अवाकिरत्.

33 K1 om (hapl) 33 D1 repeats 33^ab after 33 — ^a) T G2–5 तदा (for त्वरा-) — ^c) T G2–5 शरवर्षेण महता — ^d) G6 बाणैर् (for बालम्) D6 एवापि; G4, 5 एनम् (for एकम्). D4 समाकिरन् (for अवा°)

34 D1 om 34^ab. — ^a) S (except M5) स (for स). D2 छिन्नधन्वापि विरथ. — ^b) Dn1 सस्मरन् (for पालयन्) T G2–4 हताश्वो हतसारथि — ^c) S श्रीघ्रम् (for श्रीमान्). — ^d) K1 4 5 Dc1 Dn D1–3 5 G1 M1 2 विहायसा; K3 D4 'यस; G3 damaged (for विहायसम्). — After 34, D7, 8 ins.

327* मण्डलानि सुशिक्षाभिर्गतप्रत्यागतानि च ।

35 B1 om. 35^a–36^c — ^ab) Dc1 Dn2 D2, 5 च; D7 तु (for स) K3 D3 4 केशिकाद्यैश्च; K4 B5 Dn2 D6 कौशि°; Dn1 D5 कैश° (for कैशि°) S यल- लाघवशिक्षाभि कै( T G3 5 कौ )शिकानां च (G6 'कश्येन) विद्यया. — ^c) K2 आरुजद् (for आर्जुनिर्). Ś1 K (except K6) D1 व्यरुज( Ś1 'च )द् (for व्यचरद्). S भृशं युद्धेऽर्जुनिर्व्योम्नि — ^d) S व्यचरत् (for भृशं वै)

36 B1 om. 36^abc (cf v. l 35) — ^a) Dn1 D4 मध्येव (D4 'वा); D2 6 मध्ये च (for मय्येव) Dn2 एव (for एष). S मयि सासि( T G2 4 किं नि )पतेदेष. — ^c) Ś K D (except Dc1) G1 M3–5 महेष्वास (for °ष्वासा). — ^d) S त्रिदरे (for समरे) Ś K (except K6) D1 समरे छिन्नधन्वि( K1 2 D1 'न्व )नं

37 ^b) S K (except K6) Dc1 वरत्सरुं; D2 5 -मयच्छर; D3 मय धारं, D7 8 -मयत्सर (for °त्सरुम्) G6 खड्गचर्मणि च त्सरुं — After 37^ab, N ins

328* क्षुरप्रेण महातेजास्त्वरमाण सपत्नजित् ।

[ Dn1 वेगस् (for तेजास्) Dn2 स्फुरमाण (for त्वर- माण). ]

— ^c) G3 damaged, G6 कालेयो (for राधेयो) G1 M दशभिर् (for निशितैर्) — ^d) S सुप्रभं (for चोत्तमम्).

38 ^a) D8 व्यसिचर्मेषुपूर्णाग, D4 व्यासिवर्मा पुपूर्णांग, T G3 4 व्यसिचर्मा निघूर्णांगः; M1, 2 व्यसिचर्मेषु चूर्णांग — ^b) B Dc1 च्युत क्षितिं (Dc1 'तौ), Dn2 D3 4, 6 पपात ह (Dn2 यत्) (for पुन क्षितिम्) — ^d) K3 क्रोधो (for क्रुद्धो). K1 (before corr as in text) [ऽ]त्यधावत; K4 5 D1 [ऽ]भ्यभापत (for 'धावत).

39 ^a) K6 Dn1 D3, 5 6 रेणूत्कर (for 'उज्ज्वल). B4 चित्रितांगो (for शोभि°) S स चक्रपाणिर्ज्व( T G1 2 5 'ण्युज्ज्व; M1 2 'णी ज्व )लदीप्तगात्रो — ^b) B4 5 [उ]ज्ज्वल; D2 [आ]हृत (for [उ]न्नत-) T G3 पत्रिणा स; G1 M -वक्त्र( M3 'क्र )नास (M1 2 'स); G3 पत्रराडिव; G4 पत्रिणा सम; G5 -पत्रिनासं (for

महारथस्ततः कार्ष्णिः संजग्राह महागदाम् ॥ ३
विधनुःस्यन्दनासिस्तैर्विचक्रश्चारिभिः कृतः ।
अभिमन्युर्गदापाणिरश्वत्थामानमाद्रवत् ॥ ४
स गदामुद्यतां दृष्ट्वा ज्वलन्तीमशनीमिव ।
अपाक्रामद्रथोपस्थाद्विक्रमांस्त्रीन्नरर्षभः ॥ ५
तस्याश्वान्गदया हत्वा तथोभौ पार्ष्णिसारथी ।
शराचिताङ्गः सौभद्रः श्वाविद्वत्प्रत्यदृश्यत ॥ ६
ततः सुबलदायादं कालकेयमपोथयत् ।
जघान चास्यानुचरान्गान्धारान्सप्तसप्ततिम् ॥ ७
पुनर्ब्रह्मवसातीयाञ्जघान रथिनो दश ।
केकयानां रथान्सप्त हत्वा च दश कुञ्जरान् ।
दौःशासनिरथं साश्वं गदया समपोथयत् ॥ ८
ततो दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष ।
अभिदुद्राव सौभद्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ९
तावुद्यतगदौ वीरावन्योन्यवधकाङ्क्षिणौ ।
भ्रातृव्यौ संप्रजह्राते पुरेव त्र्यम्बकान्तकौ ॥ १०
तावन्योन्यं गदाग्राभ्यां संहत्य पतितौ क्षितौ ।
इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परंतपौ ॥ ११

---

as above) फाल्गुनि ]

3 [b]) $K_5$ $D_{6\ 7\ 8}$ सचिच्छेदुर्; $D_4$ संचिच्छेत्तुर् (for सचिच्छिदुर्) — [c]) $Ś_1$ तदा; $Ś_2$ K (except $K_5$) $D_1$ तथा (for तत) $D_{c1}$ $D_{5\ 6}$ महारथसुत कार्ष्णि; S स्वरथात्तुमुलात्का( $G_1$ $M_{1\ 2}$ °त्तुमुलां का; $M_{3-5}$ °त्तु पुन का )र्ष्णि° — [d]) B $M_1$ स; T G $M_{2-5}$ स्वां (for स) S पुनर् (for महा) $D_{n1}$ $D_4$ जग्राह महतीं ( $D_4$ सहसा ) गदां

4 [a]) $Ś_1$ स्यंदन° सोथ, $Ś_2$ $K_{1-3}$ $D_1$ °नगतैर्; $D_{7\ 8}$ °नास्त्र, $D_5$ °ध्व )स्तो (for °नासिस्तैर्) — $B_5$ om $4^c$–$7^d$ — [d]) $Ś_2$ $K_5$ B ( $B_5$ om ) D (except $D_1$) आर्दयत्; S अभ्ययात् (for आद्रवत्).

5 $B_5$ om 5 (of v l 4). — [a]) T $G_{2-4}$ गदां समुद्यतां दृष्ट्वा — [c]) $K_{4,\ 5}$ $D_{n2}$ $D_{4\ 5}$ $M_{1,\ 2\ 5}$ अपक्रामद् — [d]) Ś $K_{1-3}$ $B_{1\ 3}$ $D_{c1}$ $D_4$ नरर्षभ; T G $M_{3-5}$ रथर्षभ (for नर°).

6 $B_5$ om 6 (of v l 4) — [a]) $D_6$ जघ्ने (for हत्वा). — [b]) Ś K (except $K_5$) $D_1$ [अ]सौ (for [उ]भौ) $Ś_1$ $K_3$ $D_1$ प्राष्टि; $K_1$ प्राष्णि; $K_2$ पार्ष्टि-; $K_4$ पार्ष्टि; $G_{1\ 5}$ M प्राष्ठि; $G_{3\ 4}$ प्राष्टि (for पार्ष्णि) — [c]) $M_4$ स शराचितसर्वांगः — [d]) $K_1$ श्वाविद्यत् (sic), $D_{2\ 6}$ $G_5$ श्वाविद्धत् ( $G_5$ °द्धे ); $D_5$ चाविद्ध°; $D_4$ स्वारपतत् (for श्वाविद्वत्) Cd cites श्वावित्. $Ś_2$ K $B_4$ $D_{1\ 2\ 7\ 8}$ समदृश्यत ( $K_1$ $D_{2\ 7\ 8}$ °ते ), $D_{n2}$ $D_{5\ 4\ 6}$ $G_5$ सम° (for प्रत्य°) $D_{n1}$ श्वावित्तुल्यश्च दृश्यते, $D_3$ श्वाविद्ध° सप्रवर्तते; T $G_{2-4}$ $M_4$ श्वाविद्धे( $G_3$ °द्धि )व स दृश्यते; $G_1$ $M_{1-3\ 5}$ स श्वाविद्धिव दृश्यते

7 $B_5$ om 7 (of v l. 4). — [a]) $Ś_2$ $K_{1\ 3}$ सुव ( $Ś_2$ °प )र्णे (for सुबल-). — [b]) $K_{4,\ 5}$ $B_4$ $D_{n1}$ $D_{1\ 5}$ कालिकेयम्; T $G_{2-5}$ कोपवेगम्; $G_1$ M कोपावे( $M_{3-5}$ °द्वे )गम् (for कालकेयम्) $D_2$ अयोधयत् (for अपोथ°) — $G_5$ om (hapl) $7^e$–$8^f$ — [c]) $K_5$ अस्य (for चास्य). — [d]) $B_3$ (marg) $D_4$ S ( $G_5$ om ) विंशतिं; $D_6$ सप्तभि° (for सप्ततिम्)

8 $G_5$ om 8 (of v l 7) — [a]) $D_{n2}$ lacuna, $D_4$ माद्य, T $G_{2-4}$ $M_5$ बहून्; Bom ed चैव (for ब्रह्म) $D_{c1}$ -वशातीयान् — [b]) S ( $G_5$ om ) [अ]ति रथान् (for रथिनो) $D_{5\ 6}$ जघानारीननेकधा — [c]) $K_5$ $B_{3-5}$ $D_{n2}$ $D_{2\ 7\ 8}$ कैकयानां, $D_{c1}$ $D_{n1}$ $D_{5\ 6}$ कैके° (for केक°) $Ś_1$ पञ्च (for सप्त) — [d]) $Ś_2$ $K_3$ $B_2$ D (except $D_1$) S ( $G_5$ om ) दश च (by transp) — [e]) $D_{n2}$ T $G_{2-4}$ $M_{3-5}$ दौःशासने (for °सनि) $D_2$ दौःशासनिमथेष्वास — [f]) $D_2$ समयोधयत् (for °पोथयत्)

9 [b]) $B_2$ Dn $D_{5\ 4\ 6}$ $G_5$ आदाय (for उद्यम्य). $G_5$ सत्वर (for मारिष). — [c]) S सोभिदुद्राव (for अभि°) — [d]) $G_5$ सौभद्रश्चापि त रणे

10 [b]) $G_5$ अन्योन्य $Ś_1$ $G_6$ जय (for -वध) — [c]) B (except $B_5$) $D_{c1}$ भ्रातरौ (for भ्रातृव्यौ) — [d]) $K_1$ मुखे* (for पुरेव) $K_5$ B D (except $D_1$) पुरेव त्र्यम्बकान्धकौ

11 [a]) $D_2$ गदायासाद्; $G_5$ °भ्यां तु (for °ग्राभ्यां) — [b]) $K_5$ Dn $D_{2-6}$ आहत्य; S ताडितौ (for संहत्य) $Ś_1$ $K_4$ $B_{1\ 2}$ $D_{c1}$ $D_{n1}$ $D_{5\ 6-8}$ [अ]पततां (for पतितौ) — After $11^{ab}$, $D_{7\ 8}$ ins

330* ततो महीतलात्कार्ष्णिर्विषपीत इव स्खलन् ।
समभ्यधावद्दष्टौष्ठो दौःशासनिमथ क्षितौ ।

दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः ।
प्रोत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् ॥ १२
गदावेगेन महता व्यायामेन च मोहितः ।
विचेता न्यपतद्भूमौ सौभद्रः परवीरहा ।
एवं विनिहतो राजन्नेको बहुभिराहवे ॥ १३
क्षोभयित्वा चमूं सर्वां नलिनीमिव कुञ्जरः ।
अशोभत हतो वीरो व्याधैर्वनगजो यथा ॥ १४
तं तथा पतितं शूरं तावकाः पर्यवारयन् ।
दावं दग्ध्वा यथा शान्तं पावकं शिशिरात्यये ॥ १५
विमृद्य तरुशृङ्गाणि संनिवृत्तमिवानिलम् ।
अस्तं गतमिवादित्यं तप्त्वा भारतवाहिनीम् ॥ १६
उपप्लुतं यथा सोमं संशुष्कमिव सागरम् ।
पूर्णचन्द्राभवदनं काकपक्षवृताक्षकम् ॥ १७
तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः ।
मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः ॥ १८
आसीत्परमको हर्षस्तावकानां विशां पते ।
इतरेषां तु वीराणां नेत्रेभ्यः प्रापतज्जलम् ॥ १९
अभिक्रोशन्ति भूतानि अन्तरिक्षे विशां पते ।
दृष्ट्वा निपतितं वीरं च्युतं चन्द्रमिवाम्बरात् ॥ २०
द्रोणकर्णमुखैः षड्भिर्धार्तराष्ट्रैर्महारथैः ।

C 7 1?8
B 7 48 21
T 7 49 22

---

सोऽपि वेगवतीं गृह्य गदामुद्यम्य चार्जुनिम् ।
किंचिच्छ्रान्तस्तु सौभद्रो दौःशासनिमताडयत् ।
तावुभौ आवरात्रेव गतौ वैवस्वतक्षयम् । [5]

[ After line 3, D7 8 read $12^{cd}$ ]

— $^{d}$) D7 8 S शत्रु (for रण) D2 4 परतप

12 $^{a}$) D7 8 क्षोभयतो महीपालान्, S ताव( G1 पोत ; M1-3 5 [ sup lin ] क्षोभ, M4 पात )यित्वा महीपालान् — $^{b}$) K4 D8 वर्धनः D7 8 M वर्धनौ (for वर्धन) — After $12^{ab}$, D7 8 S ins

331* देवकल्पो महेष्वास क्षत्र दृष्ट्वा महायशा ।

[ D7 8 M1 2 देवकल्पौ महेष्वासौ ( M1 2 °सं ) (for the prior half) ]

— S om $12^{cd}$, D7 8 read it after line 3 of 330*. — $^{c}$) Ś1 B3 4 5 Do1 D2 प्रतिष्ठमान ; K4 B2 (marg.) Dn1 D2 4 6 उत्ति° (for प्रोत्ति°) — D4 om $12^{d}$–$13^{c}$.

13 D4 om $13^{abc}$ (cf v l 12) — $^{b}$) K4 वि (for च) — After $13^{ab}$, K2 (marg) ins a passage given in App I, No 7. — $^{c}$) S विम( G4 5 °मा) ना (for विचेता). — $^{d}$) D4 om सौभद्र° — $^{e}$) Dn2 D6-8 विनिहितो. S अभिमन्युर्हतो राजन्.

14 $^{a}$) G4 चमू. — $^{b}$) Some MSS नलिनीम्. — $^{c}$) G2 तदा (for हतो). K6 Dn1 हतो विरदवे वीरो, T G1 3-5 M अशोभ निहतो वीरो — $^{d}$) D6 व्याघ्रैर्; G3 वन्यैर् (for व्याधैर्) Dn1 व्याघ्रैरिव गजो वने

15 $^{a}$) K6 S वीरं; Dn2 घोरं (for शूर) — $^{b}$) Dn2 समवारयन् (for पर्य°) — $^{c}$) S (except T G2) वन (for दाव) — $^{d}$) G3 पावक गमयति च

16 $^{a}$) K1 D2 G6 विसृज्य ; B1 विमृज्य (for विमृद्य) B2 नग°, D7 तरुण (hypermetric) (for तरु) G4 गात्राणि (for शृङ्गाणि) — $^{b}$) Dn2 D2 4 6-8 G3 M4 6 (sup lin as in text) [अ]नलं (for [अ]निलम्) B1 सनिवर्त्यमिवात्यये, D5 विनिवृत्तं यथानल ; G6 शांतज्वालमिवानल — Dn2 repeats $16^{c}$ after $16^{d}$

17 Dn2 om $17^{a}$–$18^{b}$ — $^{a}$) Cd उपप्लुत (as in text) — $^{c}$) G3 मुखेन पूर्णचंद्राभ — $^{d}$) Ś2 Do1 Cv काकपक्षावृताक्ष( Cv °लि )क ; K6 Dn1 D2 6-8 °पक्ष( D6 8 7 °क्षा )वृताक्षिक, D4 °पक्षधराक्षिक ; T G3 5 6 °पक्ष( G6 °क्षा )वृताक्षिक ; G1 4 M °पक्षवृ( G1 M1 2 °ए )ताळक — After 17, D7 8 ins (the gloss)

332* काकपक्षाङ्कितकेश पौगण्डमिति सञ्ज्ञितम् ।

18 Dn2 om $18^{ab}$ (cf v l 17) — $^{a}$) G6 भूमौ नि (for त भूमौ) D6 पातित — $^{d}$) G4 विनेदु (for चुक्रुशु) T G1-4 M सिंहवद्य( G6 M1 2 °च्च ; M3-5 °द्वि )नदन्मुहु

19 $^{b}$) G4 महात्मनां (for विशां पते). — $^{c}$) Dn1 पाण्डवानां (for इतरेषां). G5 सैन्यानां (for वीराणां). — $^{d}$) K2 नेत्राभ्यां ; D8 6 नेत्रत .

20 $^{ab}$) T G2-4 अति (for अभि) T G2-4 अत रिक्षे (for अन्त°) N अतरिक्षे तु ( Ś1 Do2 D2 °रिक्षे च ; B °रीक्षे च ; D6 °रीक्षे तु ) भूतानि प्राक्रोशत ( K6 °ति ) विशां पते — K3 om $20^{cd}$ — $^{c}$) D4 दृष्ट्वातु ; S

एकोऽयं निहतः शेते नैष धर्मो मतो हि नः ॥ २१
तस्मिंस्तु निहते वीरे बह्वशोभत मेदिनी ।
द्यौर्यथा पूर्णचन्द्रेण नक्षत्रगणमालिनी ॥ २२
रुक्मपुङ्खैश्च संपूर्णा रुधिरौघपरिप्लुता ।
उत्तमाङ्गैश्च वीराणां भ्राजमानैः सकुण्डलैः ॥ २३
विचित्रैश्च परिस्तोमैः पताकाभिश्च संवृता ।
चामरैश्च कुथाभिश्च प्रविद्धैश्चाम्बरोत्तमैः ॥ २४
रथाश्वनरनागानामलंकारैश्च सुप्रभैः ।
खड्गैश्च निशितैः पीतैर्निर्मुक्तैर्भुजगैरिव ॥ २५
चापैश्च विशिखैश्छिन्नैः शक्त्यृष्टिप्रासकम्पनैः ।
विविधैरायुधैश्चान्यैः संवृता भूरशोभत ॥ २६
वाजिभिश्चापि निर्जीवैः स्वपद्भिः शोणितोक्षितैः ।
सारोहैर्विषमा भूमिः सौभद्रेण निपातितैः ॥ २७
साङ्कुशैः समहामात्रैः सवर्मायुधकेतुभिः ।
पर्वतैरिव विध्वस्तैर्विशिखोन्मथितैर्गजैः ॥ २८
पृथिव्यामनुकीर्णैश्च व्यश्वसारथियोधिभिः ।

तं दृष्ट्वा (for दृष्ट्वा नि ) D6 पतित B (except B1) शूर (for वीर) D2 6 दृष्ट्वाभिमन्यु पतित — d) D5 सूर्येम् (for चन्द्रम्)

21 a) Dn1 कुपे (for मुखे) — b) Dn1 D5 दुरात्मभि° (for महारथै ) — c) D1 8 एतैर्येन् (for एकोऽय) D4 om (hapl) from शेते up to निहते (in 22a) T G3 सख्ये; G1 2 5, M संख्ये, G4 सघे (for शेते) — d) K5 Dn1 सनातन, D5 मतो मम (for मतो हि न) S (except M3-5) नैतद्धर्म्यं मत हि न

22 D4 om up to निहते (cf v l 21). — a) Ś K1-3 D1 3 6-8 विनिहते; Dn2 निपतिते (for तु निहते) Ś K1 4 5 Dn1 शूरे (for वीरे) — d) K5 Dn1 ग्रह (for गण)

23 a) K5 B (except B4) Dc1 Dn2 D2, 4 6 G1 M1 2 सकीर्णा; T G2-5 स( G5 स्वा )स्तीर्णा (for संपूर्णा) — b) B1 रुधिरौघै; G1 M1 2 रैश्च (for °रौघ) B1-3 5 Dc1 D2 5 रुधिरौघैश्च सप्लुता — c) B4 शूराणां (for वीराणां) — d) D3 राजमाने (for भ्राज°)

24 a) Dn2 om (hapl) from परिस्तोमै up to लकारैश्च (in 25b) — b) K4 om from श्च संवृता up to शोभत (in 26d) D8 6 सचिता (for संवृता) — c) S (except G5) कशाभिश् (for कुथा°) Cd cites कुथाभि (as in text). — d) Ś K (K4 om) Dc1 Dn1 D4 6 प्रवृद्धैश् (for प्रवि°) Ś K1-3 चांबरोपमै°; Dc1 च नरोत्तमै (for चाम्ब°).

25 Dn2 om up to मलंकारैश्च; K4 om 25 (for both, cf. v l 24). — a) B1 Dn1 तथाश्व (for रथा°). Ś K1-3 वर; D1 चर; T G3 रथ; G4 गज (for नर) — c) Bom. ed सु (for च) M3-5 शितैर्, Cd पीतैर् (as in text) — d) D1 निर्मुक्तैर् (for निर्मु°). Dn1 S उरगैर् (for भुज°)

26 K4 om 26 (cf v l 24) — a) Ś1 K1 2 D1 स (for च) B1 D2 5 विविधैश्; S शरुभिश् (for विशिखैश्). — b) D5 7 शक्त्यष्टि, G2-5 शक्त्यष्टि (for शक्त्यृष्टि) Dn2 D4 प्राश (for प्रास) K4 Dn2 S तोमर (for कम्पन) — c) K1 B (except B1) D1 8 T G2 M3 चायुधैश् (for आयु°) D5 छिन्नैः (for चान्यै) Dn1 D3 4 6 खड्गैश्च विविधैश्चान्यै (Dn2 °धै राजन्) — d) D2 6 संभृता (for संवृता) D4 पतितैर्भूर्व्यशोभत — After 26, S ins

333* निघ्नद्भिरसौवार्तैरद्रुमद्रुधिरस्रवैः ।
नरैः पतद्भिः पतितैरवनिस्त्वधिक बभौ ।

[ (L 1) G5 अन्तैर् (for आर्तैर्) G3-5 उद्वहद् (for उद्वमद्) T G2 रुधिरास्रवै; M1 2 °रानवै° (sic) (for °रस्रवै) — (L 2) T G3 नरैश्च पतितैर्धीरैर् (for the prior half) ]

27 a) K4 कुथाभिश् (for वाजि°) S निहतै (for निर्जीवै°) — b) Ś1 Dc1 (marg sec m) D1, 3 श्वसद्भि°; Ś1 श्वपद्भि; K4 5 B स्वपद्भि; Dc1 (orig) श्ववद्भि°; Dn1 पतद्भि, D5 पश्यद्भि°, G1 M शयानै (for स्वपद्भि°) B शोणित क्षितौ; D4 °तेक्षितै, D8 °तोक्षितौ (for °तोक्षितैः) D5 शयद्भि शोणितोदके; T G2-5 हेमभांडपरिच्छदैः.

28 a) Dc1 Dn2 च (for स) — b) S K1 2 4 D1 सवर्मैर्मु( K4 D1 °ध्व )ज; Dn1 सवर्मायुध; D5 6 सच( D5 °च )र्मोत्तुर; D1 8 सच( D8 °व )र्मांकुश (for सवर्मायुध). D2 सर्वैः सायुधकेतुभि°. — D6 om. (hapl) 28c-29b. — d) G5 विशिखैर्मथितैर्गजैः

29 D6 om 29ab (cf v l 28) — a) Dn1 तैर्

ह्रदैरिव प्रक्षुभितैर्हतनागै रथोत्तमैः ॥ २९
पदातिसंघैश्च हतैर्विविधायुधभूषणैः ।
भीरूणां त्रासजननी घोररूपाभवन्मही ॥ ३०
तं दृष्ट्वा पतितं भूमौ चन्द्रार्कसदृशद्युतिम् ।
तावकानां परा प्रीतिः पाण्डूनां चाभवद्व्यथा ॥ ३१
अभिमन्यौ हते राजञ्शिशुकेऽप्राप्तयौवने ।
संप्राद्रवच्चमूः सर्वा धर्मराजस्य पश्यतः ॥ ३२
दीर्यमाणं बलं दृष्ट्वा सौभद्रे विनिपातिते ।
अजातशत्रुः स्वान्वीरानिदं वचनमब्रवीत् ॥ ३३
स्वर्गमेष गतः शूरो यो हतो नपराङ्मुखः ।
संस्तम्भयत मा भैष्ट विजेष्यामो रणे रिपून् ॥ ३४
इत्येवं स महातेजा दुःखितेभ्यो महाद्युतिः ।
धर्मराजो युधां श्रेष्ठो ब्रुवन्दुःखमपानुदत् ॥ ३५
युद्धे ह्याशीविषाकारान्राजपुत्रान्रणे बहून् ।
पूर्वं निहत्य संग्रामे पश्चादार्जुनिरन्वगात् ॥ ३६
हत्वा दशसहस्राणि कौसल्यं च महारथम् ।
कृष्णार्जुनसमः कार्ष्णिः शक्रसद्म गतो ध्रुवम् ॥ ३७
रथाश्वनरमातङ्गान्विनिहत्य सहस्रशः ।

C 7 1965
B 7 49 39
K 7 49 40

(for च) — b) K5 Dn1 D2 5 स्यसु ; G5 समु- (for स्यम ) K5 Dn1 D5 वाजिभि (for योधिभि ) — c) G5 प्रस्फुरितैर् ; M1.2 प्रसुक्षुब्धैर् (sic) (for प्रक्षुभितैर्) — d) Ś K B4 D (except Do1 D8) M2 हृत (for हत ) Ś K (except K5) Dn2 D1 2 4 6-8 इवोत्तमैः (for रथो ) 

30 d) M1 2 भवेन् (for [अ]भवन्)

31 a) G5 (marg as in text) सदृशं (for पतितं). — b) Ś2 प्रभं (for -द्युतिम्) — d) D2 स्त्वभवद् ; D2 5 6 अभ (for चाभ ). Ś K (except K5) D1 पांडवानां व्यथाभवत्, S आसीत्पांडुषु च व्य( M2 5 [*inf lin* ] चान्य )था

32 d) Ś1 K (except K5) D1 धीमत ; S मारिष (for पश्यत )

33 a) D6 (by corr as in text) r दीर्घमान ( D7 ण )(for दीर्यमाण) D8 सु सद् (for बलं) — c) S K B4 D (except Do1 Dn1) G4 तान् (for स्वान्) — After 33, K2 ins

334* अस्त गतोऽयं द्युमणिस्तापयित्वा महाबलः ।
सौभद्रः शत्रुदमन किं जात न विद्म वै ।
एवं ब्रुवाणो नृपतिः सैन्येन महता वृत ।
व्यूहद्वार समासाद्य बाष्पपूर्णाकुलेक्षणः ।
तच्छ्रुत्वा च हतं पुत्र कौरवैर्जिह्मकारिभि । [5]
लोकैः सकथितं सर्वमभिमन्योः पराक्रमम् ।
श्रुत्वा च तैर्हत वीर धैर्यमालम्ब्य सत्वरम् ।
परमं सत्वमालम्ब्य प्रत्युवाच युधां वर ।

[ (L. 2) The post. half is submetric ]

34 Before 34, G1 M ins युधिष्ठिर — a) Do1 D6 G4 एव (for एष) Ś1 D2 वीरो (for शूरो) — d) K5 B Do1 D5 वय (for रणे) S जेष्यामो वै ( M2-5 विजेष्यामो ) वय परान्

35 D6 om 35 — a) Ś K (except K5) B1-3 Do1 Dn2 D1 2 5 सु- (for स) K1.2 महद् (for महा ) S इत्येभ्यो दु खनी( G5 भी )तेभ्यो — b) S महाप्राज्ञो महाद्युति (G5 बल ) — c) S युधि; Ca d युधां (as in text) — d) Ś1 K (except K5) D1 7 ध्रुव; T G2-4 भृश (for ब्रुवन्) Ś1 D1 2 5 7 8 उपा नुदत्

36 M2 om 36 — a) D7 8 युधि (for युद्धे) S (M2 om) [s]पि (for ह्रि) — b) Ś K (except K5) Dn2 D1 2 5 6 रणे रिपून् ; D7 8 रणाजिरे ; S (except M4 5, M2 om) बहून्रणे (by transp) — c) Dn2 D2 6 सर्वान् (for पूर्वं) — d) Ś K1 2 D1 अप्यगात् ; K2 Dn D2-7 8 (marg) अभ्यगात्; K4 5 B2 D8 अभ्ययात्; B2 4 G2 अन्वयात् (for अन्व गात्)

37 B5 om 37ab — b) Some MSS कौशल्य D5 महाबलं; T G2-4 बृहद्बलं (for महारथम्) — c) K5 Dn1 श्रीमान् (for कार्ष्णि ) — d) D4 शिव (for शक्र ) B4 5 D4 लोकं (for -सद्म)

38 a) D7 8 तथाश्व (for रथाश्व ). Dn1 G1.4 M नराश्वरथमातंगान् ; G5 नरवाजिरथाश्वागान्. — b) B4 हत्वा शत ; B5 निहंताथ ; D5 विनिवृत्य ; S निहत्य च (G5 स) (for विनिहत्य) — c) D7 8 अभिसृता (for अभिवृतः). Dn2 D2.6 संग्रामे. B2 विरत. स तु

अवितृप्तः स संग्रामादशोच्यः पुण्यकर्मकृत् ॥ ३८
वयं तु प्रवरं हत्वा तेषां तैः शरपीडिताः ।
निवेशायाभ्युपायाम सायाह्ने रुधिरोक्षिताः ॥ ३९
निरीक्षमाणास्तु वयं परे चायोधनं शनैः ।
अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ॥ ४०
ततो निशाया दिवसस्य चाशिवः
शिवारुतः संधिरवर्तताद्भुतः ।
कुशेशयापीडनिभे दिवाकरे
विलम्बमानेऽस्तमुपेत्य पर्वतम् ॥ ४१
वरासिशक्त्यृष्टिवरूथचर्मणां
विभूषणानां च समाक्षिपन्प्रभाम् ।
दिवं च भूमिं च समानयन्निव
प्रियां तनुं भानुरुपैति पावकम् ॥ ४२
महाभ्रकूटाचलशृङ्गसंनिभै-
र्गजैरनेकैरिव वज्रपातितैः ।
सवैजयन्त्यङ्कुशवर्मयन्तृभि-
र्निपातितैर्निष्टनतीव गौश्चिता ॥ ४३
हतेश्वरैश्चूर्णितपत्त्युपस्करै-

---

संग्रामाद्, T G1-4 M अतृप्यन्ने( G1 M1 2 °न्नै )व स°; G5 व्यायच्छन्नेव स° — d ) S अगच्छत्पुण्यलोकजित्. — After 38, K2 (marg.) 5 Dn D2 4-6 ins.

335* गत· पुण्यकृतां लोकान्भास्वरान्पुण्यनिर्जितान् ।

[ Dn1 D4 5 कृतालँ( for कृतां ) D4 स्ववीर्य-; Bom ed शाश्वतान् ( for भास्वरान् ) D6 भास्वराद्वीर्यनिर्जितान् ( for the post. half ) ]

K2 cont

336* पुत्रशोकात्परं नास्ति दुःखमन्यन्महत्तरम् ।
ऐहिकामुत्रिको दाता फलस्यान्यो न विद्यते ।
स पुत्रो निहतो मेऽद्य नाहं जीवितुमुत्सहे ।
किं मया जीवितेनार्थ· सौभद्रेण विना भुवि ।

while K5 cont

337* अक्षयां गतिमासाद्य स गत शाश्वती समा ।

— After 335*, Dn2 D4 ins an addl colophon [ *Sub parvan* Dn2 अभिमन्युवध — *Day of Drona's Generalship* D4 तृतीयो दिवस · — *Adhy. name* D4 चक्रव्यूहे अभिमन्युयुद्ध ]

39 Before 39, all MSS ( except G1 M1-4 ) ins संजय उवाच — a ) S प्रवरान् — b ) Dn2 D3 6 पूरिता· ( for पीडिता· ) — c ) K1 [अ]त्युपायाम, B Dn1 D1 7 8 T G2 3 5 M1 2 [अ]भ्युपायाम ; Dn2 D2 5 °पेयाम· ( for °पायाम ).

40 a ) Ś1 K B ( except B4 ) Dn1 D1 4-7 T G2, 4 निरीक्ष्यमाणास् ( for निरीक्ष° ). Ś1 च ( for तु ). — b ) S परस्य ( for परे च ). Ś K B2 D1 7, 8 M1, 2 शरैः ( for शनैः ). Dn2 D3, 4, 6 पूर्णे( D4 पर )मायोधनं शरै — c ) Ś1 K1-3 D1 अभि( Ś1 °ति )यता ; D3 5 7 8 अपाययाता ( D8 °त ); S अप( T G3-4 °पा )याम ( for °याता ) — d ) Dn1 याता ; D2 प्राप्य ( for प्राप्ता )

41 a ) K2 D7 8 निशायां ( for निशाया ) Ś1 चाद्भुत ; Dn1 D4, 6-8 वाशिव , T G2 4 चाशिवं ; G1 M1 2 4 चाशिवा ( for चाशिव ) — b ) K4 B4 5 Do1 Dn2 D1-3 6 रुवै ; K5 Dn1 स्वन ; D4 नुत ; G1 M1 2 रुता· ; G4 -रव· ( for रुत ) Ś K ( except K5 ) B1-3 Dn2 D1 6 सनि( K1 °ति )रव र्तत ( for संधि° ) — d ) Dn1 विलंब्यमाने ; D3 विलघ° ; D8 वियभ्र° ; G1 3 4 M विळम्ब° ( for विलम्ब° ) D7 8 उपैति ( for उपेत्य )

42 a ) S ( except G5 ) शरासि- ( for वरासि ) Do1 शक्त्यृष्टि , D7 8 शक्त्य( D8 °क्त्यृ )ष्टि , G2-5 -शक्त्यष्टि ( for शक्त्यृष्टि ) G5 वरूथि ( for वरूथ ) K5 Dn2 D3 4 M5 वर्म( D4 °र्मि )णां ( for चर्मणां ) — b ) D2 तथा मणीना ; T G3 विभूषिताना ( for °षणानां ) K5 G1 4 M समाक्षिपत् Ś K ( except K2 ) Dn2 D1 3 4 6 G5 प्रभा — c ) D2 समापयन् ; Cd °नयन् ( as in text ) — d ) G5 पावकीं ( for °कम् ). T G1-4 M प्रियां तनुं स्वां रविरेति पावकीं ( G4 °क ; M4 5 °किं )

43 a ) D5 ( marg *sec m* ) महाहं ( for °भ्र ). G5 -तुंगशृंगैर् ( for -शृङ्गसंनिभैर् ) — b ) B Do1 द्विपैर् ( for गजैर् ) Ś1 D2 अनीकैर् ( for अने° ). Ś K1 3 4 उत ( for इव ). D7, 8 रणे कौशिक ( for अनेकैरिव ). T G1-4 M अने( M1-3 5 °नी )कपैर्वज्रहतैरिवाद्रिभिः ; G5 अनेकशो वज्रहतैर्यथाद्रिभि· — c ) B3, 5 Do1 D2 चर्म

